लोकप्रियसाहित्यग्रन्थमाला-35

पं. प्रेमनारायणद्विवेदिरचनावलिः

प्रथमो भागः

# काव्यसङ्ग्रहः

प्रधानसम्पादकः

**आचार्यराधावल्लभत्रिपाठी**

कुलपतिः

सम्पादकः

**डॉ. ऋषन्भारद्वाजः (ऋषभः)**

**राष्ट्रियसंस्कृतसंस्थानम्**

**मानितविश्वविद्यालयः**

(भारतशासनमानवसंसाधनविकासमन्त्रालयाधीनम्)

नवदेहली

**प्रकाशकः**

**कुलसचिवः**

**राष्ट्रियसंस्कृतसंस्थानम्**

(मानितविश्वविद्यालयः)

56-57, इन्स्टीट्यूशनल एरिया

जनकपुरी, नवदेहली-110058

दूरभाषक्रमाङ्कः - 28520976

टेली-फेक्स् - 28524532

e-mail : rsks@nda.vsnl.net.in

website : www.sanskrit.nic.in



ISBN : 978-93-86111-79-1

संस्करणम् : 2012

मूल्यम् : 170/-

मुद्रकः

नील एडवर्टाईज़िंग, दिल्ली - 93

मो. 8802451208

E-mail : neiladvertising11@gmail.com

# पुरोवाक्

वाग्देव्याः सरस्वत्या वरदपुत्रो राष्ट्रपतिसम्मानितः पण्डित-प्रेमनारायणद्विवेदिमहोदय आजीवनं सुरभारत्याः सेवां समुपासनां च कृतवान्। किमधिकं देवलोकगमनात् पूर्वस्मिन् दिवसेऽपि तेन पद्यानि विरचितानि। अतीव विशालस्तस्य रचनासंसारः। हिन्दीभाषायाः कवीनां ग्रन्थानां संस्कृते भाषान्तरणं तस्य मुख्यं वैशिष्ट्यम्। सर्वमाहत्य तेन प्रायः एकविंशतिसहस्रमितानि ( 21000 ) पद्यानि विरचितानि। अनेन तस्य देववाणीसेवा नितरां स्पष्टीभवति। कृतेऽपि भूरि परिश्रमे स जीवने तथा-विधां ख्यातिं न प्राप्तवान् तथापि ब्राह्मणोचितसन्तोषः तस्य जीवने आरम्भादेव आसीत्। तस्य काव्यकरणे प्रवृत्तिः केवलं **'स्वान्तःसुखाय तुलसी रघुनाथगाथा'** इत्युक्तिमनुसरति। साम्प्रतमपि तस्य सर्वाः कृतयो न प्रकाशिताः। तस्य रचनासु काश्चन एव प्रकाशिताः सन्ति। अत एव तस्य रचनाः प्रकाशयितुं सङ्कल्पनेयम्। तदनुसारेण विकसति पं. प्रेमनारायणद्विवेदिरचनावल्याः प्रथमोऽयं भागः'काव्यसङ्ग्रहः' नाम।

वस्तुतः पं. द्विवेदी प्रथमं तावत् सहृदयः ततश्च कविः। अतीवकरुणापूर्णहृदयोऽयं भगवदाराधने निरतः सन् स्तुतिकुसुममालां रचितवान्। सामाजिक-दैशिक-वैदेशिक-विषयेषु सचेतः सन् लघु-मौलिककाव्यानि विरच्य स्वकीया भावनाः प्रकटीकृतवान्। अन्यासां भाषाणां कवीनां मनोहरकाव्यानां गीर्वाणवाचा अनुवादः अस्मै मोदावहो विषयो भवति स्म। अत एव भाषान्तरकरणे सुदक्षस्याऽस्य बहूनि विद्यन्ते अनूदितलघुकाव्यानि। वैदिकसूक्तानां संस्कृतेऽनुवादः किमपि वैशिष्ट्यं भजते। तत्तु सञ्ज्ञापयति कवेरस्य वैदिकज्ञानं, संस्कृतभाषादक्षतां, भाषान्तरकरणपटुतां, भारतीयसंस्कृतिं प्रति अगाधश्रद्धाञ्च।



श्री ऋषन् भारद्वाज इतः पूर्वं महाकविम् अनुवचन-कवन-चातुरी-मर्मज्ञं द्विवेदिवर्यमेनमधिकृत्य अनुसन्धानकार्यं सम्पादितवान्। अस्मिन् निबद्धस्नेहो द्विवेदिवर्योऽपि अप्रकाशितं स्वसाहित्यं पार्थिव-शरीरत्यागात् पूर्वमस्मै समर्पितवान्। तस्य विशालवाङ्मयं सम्पाद्य पं. प्रेमनारायणद्विवेदिरचनावल्या अस्याः सम्पादकत्वमनेनाङ्गीकृतमित्य-यमभिनन्दनीयः।

**–राधावल्लभः त्रिपाठी**

**कुलपतिः**

# सपादकीयम्

ग्रन्थेऽस्मिन् कवेः रचनाः चतुर्षु खण्डेषु विभाजिताः सन्ति-

प्रथमखण्डः - स्तुतिकुसुममाला

द्वितीयखण्डः - स्फुटकाव्यानि

तृतीयखण्डः - अनूदितलघुकाव्यम्

चतुर्थखण्डः - वैदिकसूक्तसौरभम्

प्रथमे खण्डे भगवदाराधनाय कृताः 28 स्तुतयः सङ्कलिताः। तासु देवतानां सुललितभाषया वन्दनं कृतमस्ति।

द्वितीये खण्डे 83 लघुकाव्यानि सङ्कलितानि सन्ति। तेषु सहृदयकवेः देशे विद्यमानानां विसङ्गतीनां, तात्कालिकघटनानां, विविधविषयाणाम्, ऋतूनां च दर्शनं भवति।

तृतीय खण्डे सङ्कलितानि 24 अनूदितलघुकाव्यानि। तेषु हिन्दी भाषायाः रहीमकवेः, पद्माकरकवेः, प्रसादकवेः निरालाकवेः, माखनलालचतुर्वेदिनः, मैथिलीशरणगुप्तस्य, सुमित्रानन्दनपन्तस्य, श्रीकृष्णसरलस्य चेत्यादिकवीनामिटालियनकवितानां बुन्देलीलोक-गीतानां रसियाछन्दसां चाऽनुवादो विद्यते।

चतुर्थे खण्डे वैदिकसूक्तानां सरलसंस्कृतेन भाषान्तरणं (अनुवादः) वर्तते। तेन प्रकृतग्रन्थस्य महत्त्वम् कामपि काष्ठां प्राप्नोति। गुरुपरम्परया अधीतस्य कवेः वैदिकज्ञानं भाषान्तरणे स्पष्टं प्रतीयते।

यद्यपि ग्रन्थे वर्तमानानां काव्यानां सङ्कलने मुद्रणे च अवधानं दत्तं तथापि पाण्डुलिपीनां स्वच्छप्रतीनामभावेऽशुद्धयः काश्चन अत्र सम्भाव्यन्ते तासां निराकरणाय न विद्यते कविरित्यसन्तोषः। सहृदयधुरीणा



मनीषिणस्तदपाकृत्य पठिष्यन्त्येवेति मे विश्वासः।

ग्रन्थस्यास्य प्रकाशने कवेः धर्मपत्न्याः श्रीमतीद्रोपदीदेव्या आशीर्वादः, कवेः सुपुत्रस्य श्रीकृष्णकान्तद्विवेदिनः साहाय्यं, सागरस्थस्य डॉ. हरीसिंहगौरविश्वविद्यालयस्य संस्कृतविभागाध्यक्षायाः प्रो.कुसुम-भूरियायाः प्राध्यापकस्य डॉ.नौनिहालगौतमस्य च सत्परामर्शः प्राप्ताः। अतः धन्यवादार्हास्ते।

विद्वत्कवेः कृतयः सहृदयानाम् आह्लादाय समाजोत्थानाय संस्कृतप्रसाराय च भविष्यन्ति इत्यस्माकं दृढविश्वासहः।

**-ऋषन् भारद्वाजः**

# अनुक्रमः

## प्रथमखण्डः
## स्तुतिकुसुममाला







## द्वितीयखण्डः
## स्फुटकाव्यानि

## तृतीयखण्डः
## अनूदितलघुकाव्यम्







## चतुर्थखण्डः
## वैदिकसूक्तसौरभम्

# प्रथमखण्डः

## स्तुतिकुसुममाला



### श्रीगणेशाष्टकम्

महागजेन्द्रमस्तकं विशुभ्रशुण्डमण्डितं
त्रिपुण्ड्रकुङ्कुमाभिरामबालचन्द्रभालकम्।
महातनुं महोदरं मनोज्ञसूर्पकर्णकं
मनोजकोटिसुन्दरं शिवात्मजं नमाम्यहम्।।1।।

सुधांशुशुभ्रकान्तिकं सदूर्वकञ्जमाल्यकं
किरीटकुण्डलाञ्चितं सरत्नकङ्कणाङ्गकम्।
सितोपवीतशोभिनं विशुभ्रभास्वराम्बरं
उमासुतं मनोहरं शिवात्मजं नमाम्यहम्।।2।।

चतुर्भुजं महाबलं विचक्षणं शुभेक्षणं
निरङ्कुशं च साङ्कुषं प्रतोदपाशहस्तकम्।
जनप्रियं सुरप्रियं सदा च मोदकप्रियम्
उमासुतं विनायकं गणाधिपं नमाम्यहम्।।3।।

सदाष्टसिद्धिसेवितं क्षणादनिष्टवारकं
जनैर्निदेशपालनाय शम्भुमार्गरोधकम्।
अनेकदन्तमेकदन्तमिष्टदं प्रतोषदं
व्रजेश्वरावतारकं शिवात्मजं नमाम्यहम्।।4।।

महान्तरायशर्वरीतमोविनाशभास्करं
महागजासुरान्तकं च तारकान्तसोदरम्।
निशाचराधमान्तकं मनःस्थपातकान्तकं
उमासुतं निरन्तरं शिवात्मजं नमाम्यहम्।।5।।

कुबेरशुक्रपद्मयोनिविष्णुरुद्रपूजितम्
अजं प्रजातमद्वयं मयूरवाहनाऽनुजम्।
महामृगेन्द्रवाहिनीसुतं महाखुवाहनं
महोक्षवाहनात्मजं पुनःपुनर्नमाम्यहम्।।6।।

अनादिदेवमादिपूज्यमादिदेवमव्ययं
सुतोत्तमं सुरोत्तमं जगत्सुतोत्तमोत्तमम्।
भवोद्भवं भवात्मजं भवान्तकं भयान्तकं
सदा भवात् पृथक् स्थितं शिवात्मजं नमाम्यहं।।7।।

स्वभक्तरक्षणोद्यतं प्रसन्नमुद्रया स्थितं
क्षणात् सुबुद्धिदिव्यकान्तिकीर्तिभूतिमुक्तिदम्।
महाप्रपञ्चवारिराशितारणाय तत्परं
परात्परं कृपाकरं शिवात्मजं नमाम्यहम् ।।8।।

गणेशाष्टकमिदं पुण्यं भुक्तिमुक्तिमतिप्रदम्।
यः पठेद् भक्तितो नित्यं तस्य विघ्नभयं नहि।।



## प्रणमामि वाणीम्

वेदस्वरूपामपि चित्स्वरूपां
हंसस्वरूपां निजहंसरूपाम्।
सोऽहं परावृत्य च मन्त्ररूपा-
मभिन्नरूपां प्रणमामि वाणीम्।।1।।

विधेः प्रिया त्वं कथिताऽसि शास्त्रैः
कुत्रापि कन्या खलु नीतिरूपा।
वाग्देवता क्वापि कुमारिका त्वं
विचित्रमेतद्धि तव स्वरूपम्।।2।।

सत्ता स्वरूपान्न तु चित्स्वरूपा
शक्तिर्न वै शक्तिमतो विभिन्ना।
तस्माच्च पत्नीत्व-सुतात्व-भेदः
प्रकल्पितोऽयं भवती स्वरूपे।।3।।

त्वं विष्णुरूपाऽप्यसि विष्णुशक्ति-
र्ब्रह्मस्वरूपा ननु तस्य शक्तिः।
शक्तिं विना ब्रह्म करोति किं वा
त्वामात्मशक्तिं प्रणमामि भूयः।।4।।

अतः परं नेति पुनश्च नेति
वदन्ति वेदा अपि विस्मितास्त्वाम्।
अज्ञात- रूपामखिलेन्द्रियैर्वा
सदा विभातां प्रणमामि भक्त्या।।5।।

मातर्विना त्वत्कृपया नरः को
वक्तुं च वा वर्णयितुं समर्थः।
काव्यानि कोशाः कवयश्च सर्वे
शास्त्राणि वेदाश्च तव प्रसादात्।।6।।

सोऽहं वराकश्चपलोऽतिमन्दः
क्लान्तश्च मायाकृततुच्छजालैः।
प्रस्थूलबुद्ध्या प्रतिभाविहीनः
कथं गुणांस्तेऽम्ब निरूपयामि।।7।।

तथाऽप्यखिन्नोऽस्मि च निर्गुणायाः
कर्तुं सपर्यां स्वसुवर्णपुष्पैः।
दत्वाऽऽशिषः पूरय मेऽभिलाषाः
कालात्तवाहं चरणौ प्रपन्नः।।8।।

यद्यप्यहङ्कार इहास्ति धृष्टो
मध्ये समायाति च बाधते माम्।
विनाश्य हे देवि तमःस्वरूपं
निजप्रकाशं हृदये विधेहि ।।9।।

हृत्पुण्डरीके मम सुप्रकाशे
प्रविश्य तत्रैव सुखं निषण्णा।
अतिप्रसन्ना ह्यनुसाध्य वीणां
मन्दस्मितैर्गायतु तां क्वणन्ती।।10।।

सुतस्तवाऽयं च भवेत् प्रसन्नो
जगत्प्रसादं च लभेत येन।
नमामि मातश्चरणौ तवाऽहं
पुनः पुनर्भक्तियुतः प्रपन्नः।।11।।



सद्-ज्ञान-गङ्गा प्रसृता यतो वै
शुद्धानि चान्तःकरणानि नृणाम्।
यस्याः प्रभावाद् ऋषयः प्रबुद्धाः
प्राप्ताः पदं तत् परमं नमामि।।12।।

विभिन्नरूपा हि जगद्विलासा
यस्याः प्रसादान्न विभिन्नरूपाः
निजात्मज्ञानं खलु यत्कृपात-
स्तामात्मरूपां प्रणमामि वाणीम्।।13।।

अनन्तरूपैरनुवर्णिता त्वं
विज्ञैः सुकाव्यैरपि निर्गुणा त्वम्।
तथापि वाञ्छा तव वर्णने मे
माता ममाऽसीति नमामि भूयः।।14।।

अस्तु स्वरूपं तव कीदृगेव
शक्तिः सदा मे च तव प्रसादात्।
प्राप्ता च प्राप्स्यामि च नित्यमेव
तवैव मातः शरणं प्रपन्नः।।15।।

## सरस्वतीवन्दनम्

स्फुरद्बुद्धिहंसस्थितां चित्स्वरूपां
क्वणन्तीं करैर्भाववीणां विशालाम्।
वसन्तीं कवीनां च हृत्पुण्डरीके
भजेऽहं सदा शारदां ज्ञानमूर्तिम् ।।1।।

शरत्कालचन्द्राननां भ्राजमानां
सुनासां च तां दाडिमीबीजदन्ताम्।
प्रसन्नां सुमन्दस्मितां पद्मनेत्रां
भजेऽहं सदा शारदामम्बुजाभाम्। ।।2।।

कविभ्यः सुबुद्धिं परां काव्यशक्तिं
मुनिभ्यश्च बोधं चिदानन्दजं यत्।
ददानां यशोवैभवं मुक्तहस्तं
भजेऽहं सदा शारदां ब्रह्मशक्तिम् ।।3।।

स आद्यः कवी रामकाव्यस्य कर्ता
महान् यः कविर्भारते व्यासदेवः
प्रसादाच्च यस्याः कविः कालिदासः
सदा तां भजे काव्यशक्तिप्रदात्रीम् ।।4।।

अये वीणाधारिण्यमरवरपूज्ये सुखमयि
कवीनां वन्द्यानां हृदयकुसुमे कूजितपदे।
पयःफेनैर्हंसैस्त्रिभुवविहारिण्यभयदे
विवेकं विज्ञानं वितर मयि वाणीं च विमलाम् ।।5।।



## दिवाकराष्टकम्

नभोमहत्सरोवरे सुवर्णपङ्कजप्रभः
सुज्ज्वलत्सहस्रकोटिपावकाधिकप्रभः।
परिस्फुरत्क्षणप्रभा सहस्रक्रान्तिजित्वरः
श्रियै चिराय जायतां प्रभाकरो दिवाकरः।।1।।

यदागमे तमोगतं जगत्प्रयाति बाह्यतः
हतप्रभाश्च तारका लयं प्रयान्ति लज्जिताः।
वियोगिनी सरोजिनी च जायते शुचिस्मिता
श्रियै चिराय जायतां स भास्करो दिवाकरः।।2।।

सुरा नराः खगा मृगा यदागमे प्रहर्षिताः
द्विजा जलार्घपाणयो यदागमे स्थिता नताः।
यदागमे शरीरिणो भवन्ति कार्यतत्पराः
नृणां श्रियै स जायतां दिवाकरः कृपापरः।।3।।

वहन्ति सप्त सप्तयः सहस्रयोजनायतं
त्रयीमयाः स्फुरत्प्रभं रथं यदेकचक्रकम्।
अनूरुरग्रतोऽरुणः प्रयाति यस्य सारथिः
श्रियै चिराय जायतां स भास्करो महारथी ।।4।।

समग्रलोकवीक्षणप्रदस्त्रिलोकवीक्षको
जगद् विभीतिनाशको विशेषकान्तिदायकः।
अशेषपापतापहा सपत्नयत्ननाशकः
श्रियै नृणां स जायतामशेषलोकनायकः ।।5।।

समुज्ज्वलोष्णरश्मिभिश्च यस्य लोकजीवनं
विना च येन सर्वशः शरीरिणां न जीवनम्।
जगत्प्रसूति- पोषणप्रणाशकार्यतत्परः
श्रियै चिराय जायतां स शाश्वतो दिवाकरः।।6।।

यदंशुजः प्रमोददः सुधामयः सुधाकरः
वनस्पति प्रपोषको विभाति खेऽतिभास्वरः।
यदंशुभा प्रकाशिता नभस्यनन्ततारका
नृणां श्रियै स जायतां सुरेश्वरो दिवाकरः ।।7।।

यदीयवंशसम्भवो हि राघवो नृणां वरो
जघान योऽपराधिनं दशाननं धनुर्धरः।
जगत्समाश्रयश्च यः परः स्वकर्मतत्परः
श्रियै नृणां स जायतां कृपापरो दिवाकरः।।8।।

दिवाकराष्टकं पुण्यं यः पठेत् सूर्यसम्मुखम्।
जायते स नरः श्रीमान् कान्तिमांश्च निरामयः।।



# प्रणमामि केशरिनन्दनम्

कनकावनीधरकान्तिकं सुकिरीटकुण्डलशोभितम्
अरुणाननं रुचिरेक्षणं करुणामयं कृतमङ्गलम्।
बलशालिनं दृढवक्षसं दृढवज्रसन्निभबाहुकं
शिरसाऽञ्जना तनयं पुनः प्रणमामि केशरिनन्दनम् ।।1।।

निजशैशवे रविमण्डलं फलवत् कृताननमध्यगं
रघुनाथकार्यसुतत्वरं तरसा विलङ्घितवारिधिम्।
रघुनाथलक्ष्मणसङ्कटे निजबाहुतोलितपर्वतं
शिरसाऽञ्जनातनयं पुनः प्रणमामि केशरिनन्दनम्।।2।।

दशकण्ठलालितवाटिकावननाशनाय समुद्यतं
निहताक्षयं श्रितबन्धनं तरसा प्रदाहितपत्तनम्।
विनिवृत्य वृत्तनिवेदकं रघुनन्दनेन च सत्कृतं
शिरसाऽञ्जनातनयं पुनः प्रणमामि केशरिनन्दनम्।।3।।

हरियूथयूथपसेवितं गिरिशं हरं हरिरूपिणं
निशिचारिकुञ्जरयूथनाशननिर्भयं हरिपुङ्गवम्।
हरिनामकीर्तनमानसं हरिपादपङ्कजसेवितं
पवनात्मजं शिवनन्दनं प्रणमामि केशरिनन्दनम्।।4।।

# श्रीहनुमत्स्तोत्रम्

स्फुरत्सुवर्णरोमराजि राजितोरु विग्रहं
प्रभाकरप्रभारुणाननं सुपिङ्गलेक्षणम्।
सुधांशुखण्डमण्डनांऽशजं प्रभञ्जनात्मजं
सुतं हि केशरिप्रियं भजेऽञ्जनाकुमारकम्।।1।।

किरीटकुण्डलच्छटास्फुरत् सितोर्ध्वपुण्ड्रकं
विशालबाहुवक्षसं सुलक्षणं कृशोदरम्।
मनोहराङ्गकान्तिभिः प्रकाशिताष्टदिक्तटं
रणस्थले महाभटं भजेऽञ्जनाकुमारकम्।।2।।

रघोः कुलाब्जभानुरामपादपद्मषट्पदं
महाबलं महामतिं मरुद्गतिम् शुचिव्रतम्।
प्रमत्तदैत्यशौर्यवीर्यखर्वदर्पदारकं
निसर्गदर्पवर्जितं भजेऽञ्जनाकुमारकम्।।3।।

फलाकृतिप्रभातभानुभक्षणे सकौतुकं
स्वशैशवे महेन्द्रवज्रघोरघातमर्षणम्
क्षणादगाधसोत्तरङ्गविस्तराब्धिलङ्घनं
विशेषविक्रमोर्जितं भजेऽञ्जनाकुमारकम्।।4।।

महागदायुधं क्रुधा निशाचरक्षयङ्करं
शठैः खलैश्च दुःसहं सुहृज्जने कृपापरम्।
व्यथायुते दयापरं स्वतः सतां प्रियङ्करं
विनम्रतापयोनिधिं भजेऽञ्जनाकुमारकम्।।5।।



सुकण्ठरामचन्द्रमध्यमुख्यमैत्र्यकारणं
करोद्धृतावनीधरं च लक्ष्मणाऽऽसुरक्षणम्।
विदेहजावियोगजातदीर्घशोकनाशनं
प्रदर्शितोरुविक्रमं भजेऽञ्जनाकुमारकम्।।6।।

कपीशयूथनायकं मुदाष्टसिद्धिदायकं
हरेर्निदेशपालकं सपत्नसैन्यनाशकम्।
बहिर्दृशामगोचरं स्वसूक्ष्मदृष्टिगोचरं
स्वभक्तमुक्तिदायकं भजेऽञ्जनाकुमारकम्।।7।।

अशेष शोक हेत्वशोकवाटिकाविदारकं
सरत्नहेमभित्तिरम्यलङ्कहर्म्यदाहकम्।
प्रभोः श्रुतौ सुखावहस्य वाचिकस्य वाहकं
सदा नृणां सहायकं भजेऽञ्जनाकुमारकम्।।8।।

रसातलाच्च बन्धनात् सुबन्धुराममोक्षणं
प्रपन्नशोकपापतापविश्वबन्धमोचनम्।
ममोत्तमर्ण एष चेति राघवेण सत्कृतं
विरक्तिभक्तिसागरं भजेऽञ्जनाकुमारकम्।।9।।

पिशाच-भूतराक्षसग्रहादिकष्टवारकं
जले स्थले वने रणे सदैव रक्षणोद्यतम्।
निरन्तरं हरेः कथारसायनानुरागिणं।
निजप्रभोः पदस्थितं भजेऽञ्जनाकुमारकम्।।10।।

# सहस्रशो (रामाष्टकम् नमोऽस्तु ते)

रवेः कुलाब्जभानवे मनोजकोटिकान्तये
विशालबाहुभास्वरप्रचण्डचापधारिणे।
सुतीक्ष्णबाणपूर्णतूणशोभिनेऽरिनाशिने
विशिष्टसत्त्वशालिने रमापते नमोऽस्तु ते।।1।।

नवीनकञ्जलोचनाय नीलकञ्जरोचिषे
सुतप्तकाञ्चनप्रभानिभाम्बराय शस्त्रिणे।
सुरेशसिद्धसेविताय कञ्जनाभमूर्तये
समग्रकान्तिशोभिताय राम हे नमोऽस्तु ते।।2।।

समस्तविश्वविग्रहाय शिक्षिताय साक्षिणे
गुणग्रहाय दुस्तराय दुःखदुर्गखण्डिने।
प्रपञ्चवृक्षकर्त्रिणे कुठारवत्प्रभासिनेऽ-
प्युदारवृत्तयेऽजिताय मोक्षदायिने नमः।।3।।

मुनेर्वधूविमोक्षणाय यज्ञभूमिरक्षिणे
महेशचापभञ्जनाय रामगर्वहारिणे।
विहाय राज्यवैभवं वनप्रदेशसेविने
पितुर्निदेशपालनाय राघवाय ते नमः।।4।।

सीतया च लक्ष्मणेन सेविताय दण्डके
विहारिणे प्रहारिणे कुरङ्गदैत्यघातिने।
सुकण्ठबन्धुमारणाय कूटकृत्यकारिणे
स्वमित्रदुःखहारिणे सहस्रशो नमोऽस्तु ते।।5।।



कपीशभल्लुकादिभिश्च दुष्टतापदायिने
समुद्रसेतुबन्धनाय देवसाधुरक्षिणे।
दशाननस्य शीर्षबाहुखण्डनाय धन्विने
भुवःप्रभारहारिणे नमो नमो नमोऽस्तु ते।।6।।

शिवप्रियाय शाश्वताय सर्वदाब्धिशायिने
सुनिर्गुणाय नारदादिवन्दिताय ते नमः।
महेशशेषशारदादिसेविताय शोभिने
सुनिर्मलाय भास्वराय राम हे नमोऽस्तु ते।।7।।

अनन्तविश्वकारणाय पद्मनाभमूर्तये
विरक्तभक्तपालनाय सत्त्वविष्णुमूर्तये।
अशेषलोकनाशनाय रुद्ररूपधारिणे
तमःपराय चिन्मयाय नाथ हे नमोऽस्तु ते।।8।।

इदं सुगीतमष्टकं सुशक्तिभक्तिदायकं
सदा मनःप्रसादनं परं विमुक्तिसाधनम्।
पठन्ति ये सदा नरा प्रभोरनन्यभक्तितः
ध्रुवं भवन्ति निर्भया अशेषशोकपारगाः।।9।।

# शिवाष्टकम्

तुषार-हार-राजहंसकुन्दचन्द्रभास्वरः
सुधानुभूतिसस्मितो नवामृतांशुशेखरः।
गजेन्द्र सिंहकृत्तिभिः कृताम्बरो दिगम्बरः
शिवः शिवाय जायतां स साऽम्बिको विदांवरः।।1।।

जटास्थजाह्नवीजलैर्महाभिषेकसम्प्लुतो
नगेन्द्र नन्दिनीस्मितप्रसादतो दरस्मितः।
महाबलो महावृषो विभाति यस्य पार्श्वतः
शिवाय नः स जायतां सदाशिवो हृदि स्थितः।।2।।

श्मशानभूमिभस्मरागरूषितोऽपि पूजितः
कपालमाल्यभूषणोऽपि सर्वदेववन्दितः।
भुजङ्गमाल्यभीषणोऽपि यो नृणामभीतिदः
शिवाय नः सदाशिवः स जायतामभीष्टदः।।3।।

सुगीतिनृत्यवाद्यलास्यताण्डवादिनाट्यवित्
पुराणवेदशास्त्रतन्त्रधर्मसूत्रतत्त्ववित्।
जितेन्द्रियः समाधिकृत् समृद्धिकृद् विपत्तिहृत्।
सदा शिवाय जायतां कृशानुभानुसोमदृक्।।4।।

डमड्डमन्निनादकृत् त्रिशूलभृत् त्रिशूलहृत्
स्थितश्च बोधमुद्रया क्षणान्नृणामबोधहृत्।
गुणाकरोऽपि निर्गुणो दयामयः प्रबोधकृत्
नृणांशिवाय जायतां शिवः स वै सहस्रदृक्।।5।।



सतीवियोगशोकगश्च दक्षयागनाशकृत्
तदीयदेहमावहन् स्थले स्थले च तीर्थकृत्।
त्रिलोकरक्षणोद्यतश्च कालकूटपानकृत्
नृणां शिवाय जायतां स शुद्धदृग् जगत्सुहृत्।।6।।

मृकण्डुसूनुरक्षणोद्यतो यमाय दण्डभृद्
रणेषु बाणरक्षणाय कृष्णसैन्यरोधकृत्।
सहस्रपद्मपूजितः स्वकीयचक्रदानकृत्
नृणां शिवाय जायतां महाभवाब्धिभीतिहृत्।।7।।

गजाननः षडाननश्च यत्सुतौ स यत्पिता
गृहाधिपान्न पूर्णिका गृहे समृद्धिदा स्थिता।
सुरप्रियोऽसुरप्रियो जगत्पतिः सतीप्रियः
स नः शिवाय जायतां स्वयं हि याचनप्रियः।।8।।

# दुर्गाष्टकम्

सुधांशुसारनिर्मितेन सूज्ज्वलप्रभान्विता
सरत्नहेमभूषणैर्विभूषिता चतुर्भुजा।
अलौकिकस्मितच्छटा विराजिता सदाशया
स्वभक्तपालनोत्सुका तनोतु नः शिवं शिवा ।।1 ।।

नवीनकञ्जलोचना नवीनकञ्जविग्रहा
शरत्सरोरुहस्मिता सुनासिकाकपोलका।
विशालभालपट्टके नवेन्दुविन्दुशोभिता
दिनेशकोटिसुप्रभा तनोतु नः शिवं शिवा ।।2 ।।

प्रपञ्चसृष्टिपुष्टिनाशहेतुका स्वयम्प्रभा
महेन्द्रविष्णुपद्मयोनिदेववृन्दवन्दिता।
श्रुतेःपरा वचःपरा मनःपरा धियःपरा
स्थिता च विश्वतः परा तनोतु नः शिवं शिवा ।।3 ।।

गणेशकार्तिकेययोश्च याम्बिका त्रिलोचना
त्रिदोषहा त्रितापहा सुकीर्तिदा समृद्धिदा।
अबोधहा प्रबोधदा सुखप्रदा जयप्रदा
सदा स्वभक्तकामदा तनोतु नः शिवं शिवा।।4 ।।

महेश्वरस्य वामपार्श्वशोभिता शुचिस्मिता
जपार्कपुष्पभूषिता सुरक्तशाटिकाञ्चिता
सुवर्णरत्ननूपुरा लसत्सरोरुहाङ्घ्रिका
सुरद्रुमोपमा सदा तनोतु नः शिवं शिवा ।।5 ।।



उमारमासरस्वतीस्वरूपिणी चिदात्मिका
समुज्ज्वलेषु मानसेषु भाति या प्रभान्विता।
सदोषवत्सु चण्डिका च सज्जनेषु याम्बिका
सदाशया शिवप्रिया तनोतु नः शिवं शिवा ।।6 ।।

निशुम्भशुम्भचण्डमुण्डरक्तबीजघातिनी
त्रिशूलखड्गधारिणी सुदृप्तसिंहवाहिनी।
विमोहरात्रिनाशिनी प्रबोधसूर्यभासिनी
धराधरेन्द्रनन्दिनी तनोतु नः शिवं शिवा ।।7 ।।

सुरप्रभासमेधिता सुरैः समर्पितायुधा
निजप्रभाभिभासिता सदा समुद्यतायुधा।
जनान्तराय पापतापदोषशूलनाशिका
स्वभक्तरक्षणोद्यता तनोतु नः शिवं शिवा ।।8 ।।

# रामाष्टकम्

दिनेशवंशवारिजातसद्विकासभास्करं
नरेशकोशलेशहृन्महाम्बुधेः सुधाकरम्।
स्वमातृचित्तनन्दनाय पारिजातपादपं
नमामि राममम्बुजाभकोमलं कृपाम्बुधिम् ।।1।।

विदेहजामनःसरःसरोजसञ्जितासनं
प्रजाजनानुरञ्जनं स्वभक्तहृत्कृतासनम्।
मितेषणं शुभेक्षणं विकासि वारिजेक्षणं
नमामि राममम्बुजाभकोमलं कृपाम्बुधिम् ।।2।।

पितुर्निदेशतः क्षणात् तपस्विवेषधारिणं
सलक्ष्मणं च सीतया वने पदानुचारिणम्।
स्वराज्यलाभहानिजप्रहर्षशोकवर्जितं
नमामि राममम्बुजाभकोमलं कृपाम्बुधिम् ।।3।।

सुपर्णनिर्मितोटजे स्थितं यथा शचीपतिं
वनेचरैः सहोदरोपमैर्मिलन्तमिष्टदम्।।
सुधामयैर्विलोकनैः स्वभावतः प्रियङ्करं
नमामि राममम्बुजाभकोमलं कृपाम्बुधिम् ।।4।।

व्रणाकुलं खगं करेण लालयन्तमङ्कगं
स्वपितृवच्च तन्मृतौ ददानमम्बुनाऽञ्जलिम्।
विदेहजावियोगतो रुदन्तमश्रुपूरितं
स्वमायया नराकृतिं नमाम्यहं दयाम्बुधिम् ।।5।।



स्वमित्रभीतिनाशनाय सप्ततालभेदनं
वधं विधाय बालिनः कृताङ्गदानुलालनम्।
कृतेश्वराभिवन्दनं पयोधिसेतुबन्धनं
नमामि राममम्बुजाभकोमलं कृपाम्बुधिम् ।।6।।

किरातजाऽर्पितैः फलैः सुतुष्टिमाप्य लक्ष्मणं
पुनःपुनः प्रशंसयन्तमन्तरा मृदुस्मितम्।
नृपासनं विभीषणाय चार्पयन्तमक्षयं
नमामि राममम्बुजाक्षमीश्वरं कृपाम्बुधिम् ।।7।।

नृपोत्तमं नरोत्तमं सुरोत्तमं सुतोत्तमं
गुणोत्तमं सदुत्तमं रणेषु वीरमुत्तमम्।
बुधोत्तमं रघूत्तमं सुहृत्सहोदरोत्तमं
नमामि राममम्बुजाभकोमलं कृपाम्बुधिम्।।8।।

# कृष्णाष्टकम्

तडिक्त्विडम्बरत्विषा मिलत्पयोदकान्तिकं
कलापि पिच्छमौलिनं सरत्नहेमकुण्डलम्।
सुनासिकाकपोलकं विशुभ्रदन्तशोभिनं
स्मितच्छटाविमोहनं नमामि नन्दनन्दनम्।।1।।

जगत्प्रपञ्चमञ्चके स्वमायया महानटं
व्रजेषु गोपिकामनोऽनुकर्षणेऽतिलम्पटम्।
स्वमातृतातमोहनेऽतिचञ्चलं पटुं वटुं
यशस्वतीतपःफलं नमामि नन्दनन्दनम् ।।2।।

सुरम्यवेणुवादनैस्त्रिलोकलोकमोहनं
रणाङ्गणोक्तगीतया च पार्थमोहनाशनम्।
गिरिं निधाय चाङ्गुलौ महेन्द्रदर्पखण्डनं
विधेर्विमोहभेदनं नमामि नन्दनन्दनम् ।।3।।

सुपूर्णचन्द्रचन्द्रिकासु रासलास्यसाधकं
मिषेण तेन गोपिका मनोजदोषशोषणम्।
पटापहारलीलया स्वबोधचैलकर्षणं
स्वभक्तपापकर्षणं नमामि नन्दनन्दनम् ।।4।।

त्रिभङ्गभङ्गिराजितं मनोज्ञभङ्गिभिर्युतं
च्युतं च सत्यलोकतो जगद्धितार्थमच्युतम्।
अजं विधातृजन्मदं प्रियं च देवकीसुतं
यशोवतीतपःफलं नमामि नन्दनन्दनम् ।।5।।



कदम्बशाखिनस्तले कदम्बमाल्यभूषितं
कदम्बितव्रजाङ्गनाकदम्बमध्यसंस्थितम्।
व्रजस्थधेनुचारणाय वन्यवीथिचारिणं
यशोदया च लालितं नमामि नन्दनन्दनम्।।6।।

युधिष्ठिरस्य राजसूययागपूर्तिकारणं
जरातनूजभीममध्यमल्लयुद्धकारणम्।
कलिन्दनन्दिनीजलस्थकालियाऽहिमर्दनं
जगत्पतिं सतां गतिं नमामि नन्दनन्दनम् ।।7।।

श्रियः पतिं धियां पतिं भुवः पतिं गिरां पतिं
गवां पतिं निधेः पतिं प्रियं च रुक्मिणीपतिम्।
गुणैरनुत्तमैर्युतं स्थितं तथापि निर्गुणं
हिमांशुवंशसम्भवं नमामि नन्दनन्दनम् ।।8।।

## त्वं करुणा सिन्धुः प्रथितः

त्वं करुणासिन्धुः प्रथितः
प्रेमनिधिःसद्भिःकथितः
ज्ञाननिधिः कन्दर्पपिता
पश्य जनं स्नेहद्रवितः।।1।।

ते न हि जन्माद्याः कथिता
हन्त कथं लीला विहिताः।
सर्वगतस्त्वं सर्वहितः
सर्वपरो मायासहितः।।2।।

नाथ न जाने योगविधिं
ध्यानविधिं पूजां भजनम्।
भावविधिं जाने न च ते
त्वत्पदकञ्जेष्वापतितः।।3।।

कर्मणि सूत्रे सङ्ग्रथितो
घोरभवाब्धावापतितः।
त्वच्चरणे जातः शरणं
नाथ न जाने ऽन्यत् सदनम्।।4।।

कोऽस्ति मदीयो न हि विदितः
कोऽस्मि कुतः केन प्रहितः।
दिक्षु सदा वीक्षे विकलः



## कृष्णं वन्दे

कृष्णायाः कालिन्द्याः कूले
गोपीगोपैर्गोभिः पूर्णे।
नानावर्णैः पुष्पैराढ्ये
विभ्राजन्तं कृष्णं वन्दे।।1।।

वन्दे वंशीवाद्ये दक्षं
गोपीवृन्दे रासे दक्षम्
दैत्यैः सार्धं युद्धे दक्षं
वन्देऽहं वैकुण्ठाध्यक्षम्।।2।।

वृन्दारण्ये सान्द्रे रम्ये
कुञ्जेऽन्तः सञ्चारे दक्षम्।
गेहे गेहे चौर्ये दक्षं
वन्दे चौराणामध्यक्षम्।।3।।

विद्युद्वर्णं धत्ते वस्त्रं
कण्ठे धत्ते पाद्मं माल्यम्।
यो वै वर्हापीडं धत्ते
तं वन्देऽहं वैचित्र्याढ्यम्।।4।।

काम-क्रोध-द्वेषासक्तः
सोऽहं मोहग्राहग्रस्तः।
संसाराब्धेर्दीनो हीनो
नाहं पारं यातुं शक्तः।।5।।

नाहं ज्ञानी नाहं भक्तो
नाहं साङ्ख्ये योगे दक्षः।
नाहं त्वत्पादाब्जे सक्तो
याचे त्वां रक्षार्थं त्रस्तः।।6।।

मायातीतं मायाधीशं
श्रीदं श्रीशं श्रीगोपेशं
श्रीगोविन्दं गोलोकेशं
भूयो वन्दे श्रीयोगेशम्।।7।।



# यदि वाञ्छसि जन्म निजं सफलम्

भज विश्वपतिं कमलारमणं
भज केशिनिषूदनमाशु हरिम्
भज माधवमार्तिहरं सततं
यदि वाञ्छसि जन्म निजं सफलम्।।1।।

त्यज दुर्जनसङ्गतिमाधिकरीं
त्यज जन्मकरीं विषयेषु रतिम्।
त्यज चेन्द्रिय चञ्चलतां त्वरितं
यदि वाञ्छसि जन्म निजं सफलम्।।2।।

न हि मोहमयीं मदिरां पिब भो
न हि पीडय देहधरान् निबलान्
न हि दूषय शान्तिपरान् सुधियो
यदि वाञ्छसि जन्म निजं सफलम्।।3।।

परितापहरं भवपापहरं
परमं वरदं सुखदं शुभदम्।
व्रज विश्वपतेश्चरणं शरणं
यदि वाञ्छसि जन्म निजं सफलम्।।4।।

भज साधुजनानुपकारपरान्
जननीजनकौ स्वगुरून् सुखदान्।
निखिलानपरानपि पूज्यतमान्
यदि वाञ्छसि जन्म निजं सफलम्।।5।।

## प्रणमाम्यहं यदुनन्दनम्

नवनीलपङ्कजमञ्जुलं नवनीलनीरजकोमलं
शुकनासिकं मधुरस्मितं नवचूर्णकुन्तलराजितम्।
नवदाडिमीद्युतिदन्तपङ्क्ति विभासि दिव्यकपोलकं
कृतकेकिबर्हकिरीटकं तिलकेन शोभितमस्तकम्।।1।।

वनपुष्पतुलसीमञ्जरी परिवीतपङ्कजमाल्यकं
तडिदाभभास्वरपीतकौशिकवाससा परिशोभितम्
मृदुलेऽधरे मुरलीधरं मृदुगीतविश्वविमोहनं
व्रजनन्दनं जनरञ्जनं प्रणमाम्यहं यदुनन्दनम्।।2।।

यमुनातटे पुलिनाञ्चिते मृदुमन्दमारुतवीजितं
व्रजगोपबालकमण्डलीसहितं विशोभितदिक्तटम्।
परिहासकन्दुकखेलने निरतं चराचररञ्जनम्
सुहृदां कृते व्रजवासिनं प्रणमाम्यहं यदुनन्दनम्।।3।।

विबुधाधिपानुजमीश्वरं भुवि रोहिणीतनयानुजं
वसुदेवमानसदैवतं खलु देवकीतनयं प्रियं
विधुवंशपङ्कभास्करं यदुवंशशीतलदीधितिं
निजलीलयाश्रितदिव्यसुन्दविग्रहं प्रणमाम्यहम्।।4।।

मुनिशापतो यमुनाजलाश्रितकालियाऽहिविमर्दनं
विबुधारिसंघविनाशनाय च केशिकंसनिकन्दनम्।
व्रजगोपिकाजनरञ्जनाय च दिव्यरासपरायणं
निजभक्तरक्षणतत्परं प्रणमाम्यहं यदुनन्दनम् ।।5।।



कमलापतिं कमलेक्षणं कमलाभपाणिपदाङ्गकं
पदकञ्जनिर्गतनिर्झरीसलिलेन पावितभूतलम्।
वृषभानुजाहृदयाम्बुजे विमले मुदा परिचारिणं
व्रजभूमिरेणुविहारिणं प्रणमाम्यहं यदुनन्दनम् ।।6।।

विधिपूजितं शिवपूजितं सुरसिद्धमानवपूजितं
व्रजगोपवृन्दकपूजितं द्विजधेनुपूजनतत्परम्।
जलधेः सुताकरकञ्जलालितपादयुग्मसरोजकं
शिवपूजने निरतं सदा प्रणमाम्यहं यदुनन्दनम् ।।7।।

# नाथ पाहि त्वमेव

अहमतिपतितस्त्वं पापपुञ्जापहारी
भवजलधिगतोऽहं तारकस्त्वं हि पोतः।
ऋजुरसि कुटिलोऽहं दोषदर्शी परेषां
प्रभुरसि जगदीशोऽहं तवाङ्घ्र्योः प्रपन्नः।।1।।

गगनमिव नु सर्वव्यापको निर्मलस्त्व-
मतिशयशक्तोऽहं मायया व्यापृतश्च।
इदमपि हृदि मन्ये ऽज्ञानतो नास्मि सोऽहं
यदि भवति कृपा ते क्षुद्रतायास्तरेयम्।।2।।

त्वमसि च निजभक्तानां सन्तापहर्ता
न हि मम हृदये सा स्थीयते क्वापि भक्तिः।
यमनियमरतानां दुर्लभो योगिनां त्वं
सकलनियमदूरं नाथ पाहि त्वमेव।।3।।

परसुखमिह मन्ये स्त्रीषु वित्तादिकेषु
प्रतिदिनमयि याचे तत्त्वनित्यं हि सर्वम्।
मम हृदयगतस्त्वं नाथ जानासि भावान्
असि च खलु दयावान् पाहि नूनं विपत्तेः।।4।।



# भगवत्प्रार्थना

ये त्वाह्वयन्तीह नराः प्रपन्ना
दुःखाद् भयाद् वापि महाविपत्तेः।
दयापरः पासि च तान् विपन्नान्
शीघ्रं समागत्य जनार्दनोऽसि ।।1।।

प्राप्तो स्युदारैर्मुनिभिस्त्वमात्मन्
सन्तर्पितास्ते वचनामृतेन।
जानामि नाहं तवार्चनं वै
मूढे प्रपन्ने दयसे कथं न। ।।2।।

एकेन नाम्नाऽपि लयं प्रयान्ति
पापान्यनन्तानि कथं सपापः।
इति प्रपन्नं शरणं कृपालो
प्रपाहि नेत्रे सफलीकुरुष्व ।।3।।

मनोरथाः कस्य न पूरितास्ते
निवर्तितो द्वारगतस्त्वया कः।
पराङ्मुखं मां कुरुषे कथं वै
कथं निजाङ्गे कुरुषे न दोर्भ्याम्।। ।।4।।

सुस्वादुमिष्टं हि बुभुक्षितोऽन्नं
हैयङ्गवीनं च यथाखुभुग् वै।
विलोक्य धैर्यं कुरुते न तद्वत्
प्रभो सतृष्णोऽस्मि तव स्वरूपे ।।5।।

को वाथवाऽन्योस्ति मम प्रियो यः
सत्यं ममत्वं मयि दर्शयेत् कः।
कस्मै सुखं दुःखमयो विपत्तीः
सर्वं वदेयं च शृणोति को वा ।।6।।

आयाहि किं पश्यसि दूरसंस्थः
पर्याकुलोऽहं तु वियोगतस्ते।
प्राणांश्च मे सान्त्वय पादयोस्ते
गतोऽस्मि भो रोदिमि पश्य नाथ ।।8।।

सहस्रसंख्यो भवितुं समर्थो
गोपीषु सत्यं निजमायया चेत्।
एकेन रुपेण च मत्समीपं
विपत्तिरत्रागमनाय का ते ।।9।।

पादाब्जयुग्मे स्वशिरो दधामि
प्रसादपुष्पं न ददासि किं मे।
उदारभावो विदितो मया ते
श्रुत्वा च नामैव समागतोऽस्मि ।।10।।

द्वाः स्थस्तवाऽहं कियतो हि कालात्
समाह्वयामीति न वेत्सि किं वा।
स्वीकारशब्दं गदितुं नवेच्छा
शब्दैर्न किं सान्त्वयितुं समर्थः ।।11।।

वदाऽथवा नाथ कठोरवाचा
गच्छाशु भो मा च ममाऽग्रतो भूः।
उत्तिष्ठ वाऽन्यत्र कुरुष्व किञ्चिद्।
यद्रोचते किन्तु वरं न मौनम्। ।।12।।



जाने त्वहो भ्रामयितुं जनांस्त्वं
दक्षोऽस्यहं चास्मि महान् प्रधृष्टः।
मौनं च तुभ्यं यदि रोचते चेत्
त्यक्ष्याम्यहं त्वां न कदापि नाथ ।।13।।

पापः सदोषोऽप्युत सापराधः
वतान्यथा वास्मि तवास्मि दासः।
क्षोभो न योग्यो मयि चक्रपाणे
जानीहि बालं निजबोधहीनम् ।।14।।

निजं हि रूपं ननु दर्शितं ते
पुरा स्वभक्तेभ्य इति श्रुतं मे।
प्रभो कथं मां च तिरस्करोषि
तवाश्रयोऽहं करुणां विधेहि ।।15।।

समर्पितेयं स्वतनुस्त्वदीये
पादाब्जयुग्मे च यतो नु गङ्गा।
जाता जगत्पावयितुं पवित्रा
स्प्रष्टुं न मामिच्छसि किं मुरारे ।।16।।

प्ररोदनात् किं परमं बलं मे
बलं निजं दर्शयसीह किं माम्।
याचे त्वहं केवलमेव नाथ
स्नेहं परं ते करुणानिधान ।।17।।

जानन्ति लोकाश्च हरेर्जनोऽयं
जाने न च त्वां न च त्वत्स्वरूपम्।
स्थितोऽस्मि मार्गं प्रसमीक्ष्य माणो
कदा त्वमायास्यसि नैव जाने ।।18।।

प्राणाश्च मे कण्ठगता इदानीं
वियोगदुःखैः क्लिश्नासि किं माम्।
श्रान्तोऽस्मि नम्रो विनयान्वितोऽपि।
विलोक्यते किं न कृपावलोकैः ।।19।।

न स्नेहसूत्रं च समापनीयं
मत्वा सुदीनं पतितं भवाब्धौ।
अहं भविष्यामि कथं हि दीनो
भवन्तमाश्रित्य जगन्निवासम् ।।20।।

प्रयोजनं नैव पतिव्रताया
वासोभिराभूषणरत्नजालैः।
पत्युर्वियोगे न सुखाय सर्वं
त्वत्तो वियोगे विरसं जगन्मे ।।21।।

स्नेहेन चाश्लिष्य ममाङ्गशान्तिं
विधाय दृष्ट्याऽमृतकल्पया च।
प्रश्नांश्च पृष्ट्वा तडिदम्बरेण
प्रोञ्छ्ययाननं सान्त्वयिता कथं न ।।22।।

प्रदर्शयाऽधोक्षज रम्यरूपं
विहस्य मे तर्पय नेत्रयुग्मम्
गृहीतपादश्च मनोऽनुकूलां
वार्तां विधास्यामि सुखं तवाऽग्रे ।।23।।

द्रक्ष्यामि रूपं च यदा त्वदीय-
मवर्णनीयं हि सुखं तदा मे।
सत्यं ब्रवीमीह समर्प्य जीवं
प्राप्स्याम्यहं जन्मफलं तवाङ्घ्र्योः ।।24।।



त्वत्पादयोस्ताक्ष्यं शिरोऽवधार्य
सम्प्रार्थये ह्यानय सत्वरं मे।
हरिं विभुं प्रेषय शेष! शीघ्रं
मातः रमे! प्रेषय तं त्वमेव ।।25।।

नरायण त्वां नयनैरपश्यन्
गोपा व्रजे ते बहुभाग्यवन्तः।
लोभान् मनो मे वशगं न चाऽद्य
गृहाण तद् दर्शय चात्मरूपम् ।।26।।

त्वमेव पुण्यं मम सञ्चितं भो
त्वमेव सत्कर्म च मे स्वधर्मः।
व्रतं ममत्वं नियमास्त्वमेव
त्वमेव सर्वं मम देवदेव।।27।।

प्रियोत्तमस्त्वं पुरुषोत्तमस्त्वं
देवोत्तमंस्त्वं धनमुत्तमं च।
सर्वस्य सर्वस्वमसीति जानन्
त्वत्पादयोर्वै शरणं प्रपन्नः ।।28।।

कस्त्वत्समो मे परितापहारी
प्रश्नान् वदेयं च कमुत्तरेद्यः।
को वा करं मूर्धनि मे दधातु
प्रेम्णा प्रभो पाहि निराश्रयं माम् ।।29।।

लोकाभिरामोऽखिलमङ्गलानां
हेतुश्च वेदस्य च वेदकर्तुः।
प्रश्नोत्तरौ योऽखिलदर्शनानां
प्रसीदतां मे स हरिः शरण्यः ।।30।।

वेदाश्च सर्वेऽप्यनुवर्णयन्ति
यं योगिनो ध्यानगताः स्मरन्ति।
गोपीकराभ्यां स तु बन्धमाप्तो
दीनं वचो वक्ति यथापराद्धः ।।31।।

अम्भोजाक्षः किरीटी प्रहसितवदनो
बालकोऽसौ व्रजेशो।
मालां वै वैजयन्तीं सरसिजतुलसी-
मिश्रितां सन्दधानः।

आनन्दाब्धौ यशोदां सुरुचिररुचिरै-
र्मज्जयन् कोमलाङ्गै-
र्नेत्राग्रे सर्वदाऽसौ विलसतु सुनवं
कौतुकं वर्धयन् मे ।।32।।



# नौमि गोपीतनूजम्

नालिनरुचिरदोर्भ्यां कोमलाभ्यां चलाभ्यां
दिनकरतनयाया रम्यकूलेषु केल्या।
जगदिव रचयन्तं धूलिभिर्धूसराभ्यां
जलधररुचिरं तं नौमि गोपीतनूजम् ।।1।।

रुचिरजलजनेत्रं पीतवासो वसानं
वनजकुसुममालां कम्बुकण्ठे दधानम्।
खगरुतमनुकुर्वन्तं च रम्यं चलन्तं
निरुपममतिकान्तं नौमि गोपीतनूजम् ।।2।।

नवकिसलयकल्पे कोमले स्वाधरोष्ठे
मरकतमणिकान्तिं वादयन्तं च वेणुम्।
सुमधुररणितैः सम्मोहयन्तं त्रिलोकीं
निजसुखपरिपूर्णं नौमि गोपीतनूजम् ।।3।।

वनतटमनुगच्छन्तं च वत्सान् सगोपान्
मधुमधुरवचोभिर्नामभिश्चाह्वयन्तम्।
जलगतमिव चन्द्रं तारकैरभ्युपेत-
मतिचपलतरैस्तैश्चञ्चलं नौमि बालम् ।।4।।

करधृतमुरलीकं श्यामलं मेघकान्तं
नवसरसिजनेत्रं पूर्णचन्द्राननाभम्।
मृदुमृदु विहसन्तं चारुबिम्बाधरोष्ठं
त्रिभुवनकमनीयं नौमि गोपीतनूजम् ।।5।।

व्रजवनवनिताभिः केलिलोलं किशोरं
ह्यतिशयंचपलं तं राधिकाचित्तचौरम्।
मनसिजशतकोटीर्लज्जयन्तं सुवेष-
मनवरतमनादिं नौमि गोपीतनूजम् ।।6।।

जलनिधितनयाया आननाब्जद्विरेफं
निशिचरकुलरात्रेर्नाशने चण्डरश्मिम्।
चरणनतजनानां विश्वपाथोधिपोतं
निखिलभुवनपालं नौमि गोपालबालम् ।।7।।

दिनमणिरिव सर्वेषां प्रकाशं ददानं
यदुकुलकमलानां सद्विकासाय भानुम्।
मुनिजनहृदयाब्जे सर्वदा राजमानं
कमपि मधुरबालं नौमि गोपीतनूजम् ।।8।।

सुरनरमुनिसेव्यं शाश्वतं सत्यरुप-
मगुणभजमनादिं नित्यमानन्दकन्दम्।
शुभमतुलमनन्तं स्वात्मरूपं ह्यरूपं
हृदि हृदि विहरन्तं नौमि गोपीतनूजम् ।।9।।



# नहि धाव हरे नहि धाव हरे

द्रुतमातपतापितभूमितले नहि धाव हरे नहि धाव हरे
नवनीतमहो नयसे नय भो द्रुतमेहि पुनर्विहसन् निकटे।
रुचिरं नवनीतयुतं स्वमुखं किल दर्शय सञ्चितपापहरम्
भवसिन्धुगतं परिपाहि पुनः किल देहि सुखं हर मे विपदम्।।1।।

त्वमु नृत्यसि वै करतालयुतः पदकिङ्किणिमञ्जुलघोषयुतो
मृदुहास्ययुतः शिशुबालगणैःसह धूसरितो रजसा सुभगः।
नवकोमलवत्सगणैःसुभगैरनुरागमयैश्च वृतः परितो
रमणीयतमस्तपसा सुलभःसततं विमले हृदये प्रकटः ।।2।।

## अनन्तं शरणं प्रपद्ये

पर्णानि पुष्पाणि फलानि वृक्षे
भवन्त्यनन्तानि पतन्ति काले।
नवानि चाऽन्यानि भवन्ति चाशु
शुष्काणि भूयो निपतन्ति भूम्याम् ।।1।।

तेभ्योऽप्यनन्ताश्च भवन्ति वृक्षा-
स्तेभ्यस्तथान्ये च ततश्च वान्ये।
दृष्ट्वा महत्त्वं च तदनन्तताया
भक्त्या ह्यनन्तं शरणं प्रपद्ये ।।2।।

नानाफलानां च रसा अनन्ता
स्वादं न वक्तुं प्रभवन्ति लोकाः।
गुणाश्च तेषां विविधा अनन्ता
यस्य प्रतापात्तमहं प्रपद्ये ।।3।।

शिशुर्हि बालस्तरुणश्च वृद्ध-
स्ततो ह्यनेके शिशवश्च बालाः।
वृद्धा युवानो नितरामनन्ता
भवन्ति नश्यन्ति भवन्ति चाऽन्ये ।।4।।

दृष्टा अनन्ता मतयश्च तेषां
कर्माण्यनन्तानि समाचरन्ति।
आश्चर्यमेतत् परितो विलोक्य
तमेव भक्त्या शरणं प्रपद्ये ।।5।।



खगा अनन्ताःपशवोऽप्यनन्ता
जले वनेऽप्योषधयो ह्यनन्ता।
कीटा अनन्ताश्च सरीसृपाश्च
यस्येच्छया तं शरणं प्रपद्ये ।।6।।

द्रष्टुं त्वनन्ता मनुजैर्न शक्त्या
स्प्रष्टुं च जीवा परमाणुरूपाः।
यस्यैव शक्त्या विचरन्ति नित्यं
भक्त्या ह्यनन्तं शरणं प्रपद्ये ।।7।।

तारा समन्तात् प्रसृता अनन्ता
दीव्यन्ति चन्द्रा अथ भास्कराश्च।
तेभ्योऽपि भावा प्रभवन्त्यनन्ता
अनन्तरूपं शरणं प्रपद्ये ।।8।।

विद्या ह्यनन्ताः किल यास्त्रिलोक्यां
साहित्यसङ्गीतकला ह्यनन्ताः।
विज्ञान विद्या न हि यान्ति चान्तं
तस्मादनन्तं शरणं प्रपद्ये ।।9।।

## कुटीषु गत्वा पश्यतु विवृतद्वारासु शुद्धासु

तं वाञ्छसि चेद् द्रष्टुं देवं परमं परात्परं पूर्णम्।
अन्वेषय तं कल्पितधर्मात् परामसुभृतां मध्ये।।1।।

न वने तस्य निवासो तीर्थे मूर्तौ न मन्दिरे सलिले
यद्यस्ति ते दिदृक्षा प्रयाहि दीनेषु जीर्णवसनेषु।।2।।

न हि स मिलिष्यति धनिनां विद्युद्विद्योतिते भवने
न च वा सुरत्नखचिते पीठे कौशेयाच्छादिते दिव्ये।।3।।

यद्यपि सर्वव्यापी द्रष्टुं शक्यो जनैर्न मायासु।
कुटीषु गत्वा पश्यतु विवृतद्वारासु शुद्धासु।।4।।

अन्नं जलं फलं वा वसनं वचनं किमप्यन्यद्
दास्यसि भक्त्या यत्त्वं विहस्य स गृहीष्यति त्वरितम्।।5।।

वृद्धः क्वचित् स बालः पङ्गुः खञ्जः क्वचिद् बधिरः।
अन्धो रोदिति दीनो हृदयमिव परीक्षितुं नित्यम्।।6।।

क्वचित् स घर्मे तप्तो जलं पिपासुः कदापि वर्षासु।
आगच्छति शरणार्थी दुःखी स दर्शनं दित्सुः।।7।।



## यशोहानिर्मातर्न हि मम भवत्यास्तु भविता

सुखैर्हीनं बाल्यादपि च धनहीनं विरहितं
सुहृद्भिः सम्मानैः सदुपकरणैर्वञ्चितमथो
कथं दृष्टवा मां वै जननि न हि तेऽद्यापि करुणा
यशोहानिर्मातर्नहि मम भवत्यास्तु भविता।।1।।

दयादृष्टिर्मातर्यदि न कुरुषे चेन्मयि तदा
हसेयुर्मां लोका अटति खलु वीथ्यां तव जनः
यथा दीनो हीनो जननि मम हे देहि शरणं
यशोहानिर्मातर्नहि मम भवत्यास्तु भविता।।2।।

ममावस्थां दृष्ट्वा जननि करुणां चेन्न कुरुषे
जगत्यां कोऽन्यो मयि सकरुणः स्याद् बुधजनः।
त्वया नोपेक्ष्योऽयं कथमपि तवाङ्घ्रौ निपतितः
भवत्या विश्वेऽस्मिन् भवतु खलु कीर्तिः सुविदिता।।3।।

अहं संसारेऽस्मिन् बहुलतरदुःखे ऽतिविषमे।
भ्रमन् प्राप्तस्त्वां वै जननि शरणं क्लेशहरिणीम्।।
अये मातर्दुर्गे शृणु मम वचः स्वस्थमनसा
यशोहानिर्नूनं न हि मम भवत्यास्तु भविता।।4।।

## कृष्णच्छविः

मुखे मन्दहासच्छविः कामकोटि-
समा चक्षुषी रञ्जिते प्रेमरागैः।
सुदन्ता यथा दाडिमीबीजपङ्क्ति-
र्विलोक्य भ्रुवौ जायते चापबुद्धिः ।।1।।

यदोष्ठौ च बिम्बाफलाभ्यां सदृक्षौ
सुधावर्षणं कोमलैर्यस्य वाक्यैः।
स राधापतिर्भावगम्यो ऽद्वितीयो
ममान्तः स्थले राजतां स्वप्रकाशः ।।2।।



## छविः कृष्णस्येयं वितरति मुदं कामपि परम्

करे वंशी रम्या विलसति विभोरोष्ठपुटके।
छटा वै दन्तानां भवति मृदु विद्युद्विलसितम्।
ललाटे कस्तूरी तिलककृतरेखा विलसति
छविः कृष्णस्येयं वितरति मुदं कामपि परम्।।1।।

नवीनं कौशेयं कटितटधृतं पीतमतुलं
सुबद्धं कच्छं यत्त्वतिशयमनोहारि चलितम्।
मणीनां दीप्तानां द्युतिरिहतरङ्गैश्च मिलिता
चमत्कारं किञ्चिज्जनयति जनानां मनसि वै।।2।।

सुहास्यं दृष्ट्वा ते भवति च सुधा लज्जितमुखी
किमाश्चर्यं गोप्यो विगतसुतगेहादिविभवाः।
यतो मग्ना देवा निखिलमुनयो येऽपि यतय-
स्तदा का ह्यन्येषां जगति कथनीया खलु कथा।।3।।

विशाला दृष्टिः सा खलु न तुलनीया तव विभो।
मृगीणां नेत्रैर्वा जलजकमलैर्मीनचलनैः।
धनुर्भ्यां कामस्य ह्ययि कुसुमबाणस्य ललिता
छविः कृष्णस्येयं वितरति मुदं कामपि परम् ।।4।।

गले मुक्ताहारास्तुलसिवनमाला च लसिता
सुगन्धाकृष्टा वा मधुररसलुब्धा मधुकराः।
सुमन्दं गायन्तो प्रभुगुणगणाञ्जातपुलकाः
प्रमत्ता मोदन्ते विमलमतिभक्ता इव जनाः ।।5।।

## अहो प्रत्यक्षं मे प्रकटय निजं रूपमतुलम्

महामोहग्राहो भवजलधिमध्ये ग्रसति मां
हृदि क्रोधज्वाला दहति मृदुमर्माणि नितराम्।
मनो मे मात्सर्यं व्यथयति समन्ताद् रिपुरिव
दयाम्भोधे दीने कुरु मयि दयां माधव हरे।।1।।

क्षरत्यायुः शीघ्रं घृतमिव घटे पाकरहिते
न बुद्धिर्नो चेतो न मम करणान्यपि वशे।
तनुस्तेजोहीना विषयविषपानादनुदिनं
कथं साक्षात् कुर्यां तव विमलरूपं निरुपमम्।।2।।

अशुद्धो देहोऽयं मलमयपदार्थैर्विरचितः
कथं शुद्धं त्वार्चेदमलमरजस्कं शुभतमम्।
चलं चित्तं ध्यातुं प्रभवति न चान्तस्थमचल-
मतर्क्यं तर्कैस्त्वां कममनुपमं तर्कयतु धीः ।।3।।

इमे नेत्रे वामा नयनशरविद्धेऽथ सविषे
अहो दग्धे श्रोत्रे हरिसुजननिन्दाश्रवणतः।
त्वचा दग्धा स्पर्शादशुचिविषये तत्परतया
कथं साक्षात् कुर्यां मलिनकरणैस्त्वां सुविमलम्।।4।।

तथाप्येतच्चित्तं जगति विरसे नैव रमते
ह्यचिन्त्यं चिद्रूपं रसमयमनन्तं विचिनुते
मनो नित्योन्मादि प्रबलमथ मथ्नाति करणा-
न्यहोरात्रं चैतच्चलति न कदाचिद् विरमति।।5।।



कथं नाथं ध्याये मनसि नहि रूपं श्रुतमहो
कुतस्त्वामन्वेष्टुं जगति वितते यामि विरसे।
भयाद् भीतं चैतद् भ्रमति मम चेतो दश दिशः
शुभं नो पन्थानं त्रिभुवनगुरो मां दिश विभो।।6।।

प्रतीक्षायां श्रान्ते प्रतिपलमहो नाथ नयने
परिश्रोतुं श्रोत्रे मधुरमुरलीं वाञ्छत इतः।
मम प्राणा क्लान्ता दधति नहि धैर्यं कथमपी-
त्यहो प्रत्यक्षं मे प्रकटय निजं रूपमतुलम्।।7।।

## ध्रुवमपयशसो वा भाजनं सम्भवेस्त्वम्

क्व हि परमसुखं मे वाऽथ दुःखं कुतोऽस्ति
नहि नहि नहि जाने वस्तुतः किं हितं मे।
हितमिति हि जनानां त्वं विजानासि सर्वं
कुरु हितमथवा त्वं स्वात्मतन्त्रोऽसि नाथ।।1।।

इयमिह मम कर्तव्या त्वदीयाऽभियाच्चा
त्वमसि खलु वदान्यो विश्रुतोऽसि त्रिलोक्याम्।
अथ तव परिपाल्या या त्वदीया प्रतिज्ञा
ध्रुवमपयशसो वा भाजनं सम्भवेस्त्वम्।।2।।



## किं वा लिखेयम्

किं वा लिखेयं न हि भाति शून्ये
त्वत्तो वियोगे हृदये मदीये।
वाणी समर्था गदितुं न किञ्चित्
किं वा वदेयं खलु कं वदेयम्।।

## कुत्रावकाशो मम

एतत्त्वद्य मया कृतं सुनिपुणं श्वोऽन्यत्करिष्ये त्विदम्
यामिन्यां च दिने क्षणाय नितरां कुत्राऽवकाशो मम।
इत्थं वक्ति जनः सदा च मनुते सर्वं यथा तद्वशे
शेतेऽसौ न हि वक्ति किञ्दिपि वा श्वासावरोधे क्षणात्।।

# द्वितीयखण्डः

## स्फुटकाव्यानि



### पुनर्नमामि भारतम्

हिमालयो मणिप्रभः शिरोविभूषणं सदा
सदाशिवो विभाति यत्र साम्बिको दिवानिशम्।
श्रियः पुरं समृद्धिमच्च यस्य भालपुण्ड्रकं
महाविभूतिभास्वरं पुनर्नमामि भारतम्।।1।।

त्रिमार्गगाकलिन्दजाजलाभिषिक्तदेहकं
महासमुद्रवारिराशिधौतपादपद्मकम् ।
रविप्रभाविराजितं शशिप्रभासुशोभितं
निजप्रभाविभावितं पुनर्नमामि भारतम्।।2।।

सुरैः सदा सुधाशनैश्च यत्र जन्म याचितं
हरेः पदानुधावनैश्च यद्रजः सुपावनम्।
यशश्च यस्य पावनं त्रिलोकगं सुभास्वरं
मुनीन्द्रवृन्दसेवितं पुनर्नमामि भारतम्।।3।।

पयोयुतं घृतैर्युतं सुधान्यराशिसागरं
धनान्वितैर्गुणान्वितैर्विदांवरैर्विराजितम्।
सुमेरुवत् समृद्धिमत् महार्हरत्नगर्भितं
सुखाकरं शुभाकरं पुनर्नमामि भारतम्।।4।।

कलिङ्गवङ्गमध्यदेशगुर्जराङ्गकेरला-
समोत्कलोत्तरप्रदेशमद्रकान्तिरूषितम् ।
सुपुष्पितैः फलप्रदैर्लतान्वितैरनोकहै-
र्वनैश्च नन्दनोपमैर्वृतं नमामि भारतम्।।5।।

नृसिंहमत्स्यसूकरादिवामनावतारकं
व्रजेशशेषराघवेन्द्रजामदग्न्यधामकम्।
प्रयागराजविश्वनाथसोमनाथमन्दिरै-
रशेषपुण्यहेतुकं पुनर्नमामि भारतम्।।6।।

उमा रमा सरस्वती महाकृपाभिनन्दितं
शिवामहेशविष्णुसूर्यवक्रतुण्डदैवतम्।
निरात्मतानिराकृतौर्निजात्मबोधसंस्कृतं
सुखे विपत्सु सर्वदा समं नमामि भारतम्।।7।।

कवीन्द्रभासकालिदासमाघहर्षभारवि-
सुबन्धुदण्डिबाणभट्टकाव्यसूक्तिनिर्झरम्।
वशिष्ठगाधिसून्वगस्त्यजैनबौद्धसाधना-
तपःप्रभाप्रपूरितं पुनर्नमामि भारतम्।।8।।



# स्वतन्त्रता - दिवसः

स्वतन्त्रतादिवसो रमणीयो निरन्तरं स्पृहणीयः।
आगच्छति सुखदः प्रतिवर्षं सर्वैः संस्मरणीयः।। 1।।
जातरूपवीतंसससंस्थितः फलमिष्टान्नैः पुष्टः।
स्वातन्त्र्यं सर्वदा वरिष्यति शुको यदि स्यात् पृष्टः ।।2।।
ग्रामे ग्रामे नगरे नगरे जातमद्य जागरणम्।
ध्वजाः पताकाः स्वन्नवितरणं देशगीतसंश्रवणम् ।।3।।
जलनिधिजलमानीय च जलदैरिन्द्रप्रहितैर्ललितः।
दुन्दुभिघोषैर्महाभिषेको भारतमातुर्विहितः।।4।।
उपस्थिता प्रकृतिः स्नात्वेव प्रववौ पवनः सुखदः।
जय-जय-नादो दिक्षु विश्रुतः परमानन्दः प्रसृतः।।5।।
उद्वेल्लित इव महासमुद्रो जननिवहोऽगणनीयः।
पूर्णचन्द्र-सदृशो महोत्सवःकिञ्च दृशाऽऽचमनीयः।।6।।
स्वतन्त्रतादिवसो..............

स्वतन्त्रतायज्ञे महनीये पावनयूपनियमिता।
इव पशवः शतशो नेतारो निशिताऽस्त्रैश्च विशसिताः।।7।।
व्यपगतदेहगेहधनमोहा बाला युवका वीराः।
प्राप्ता वीरगतिं सङ्ग्रामे देशविमुक्त्यै धीराः।।8।।
मदनमोहनो मोहनदासस्तिलको लाजपतोऽन्यः।
सिंहः सावरकरः सुभाषश्चन्द्रशेखरो धन्यः।।9।।
राजर्षिः पुरुषोत्तमदासः श्रीनेहरूपरिवारः।
श्री राजेन्द्रः सहस्रशोऽन्ये प्रबभूवुर्नेतारः।।10।।
कारागेहयातना बहुशो शास्त्राघातः सोढः।
मातुर्निगडं छेत्तुं चैतैर्बन्धुप्रेमाऽपोढः।।11।।
सत्याहिंसाबलः सलगुडो जिगाय दुर्बलकायः।
पराजितोऽभूत् सम्राडन्यः सैन्यसहस्रसहायः।।12।।
स्वतन्त्रतादिवसो.............

भूमिविभागाः सर्वे हरिता देशेऽखिले प्रकाशः।
विद्युच्चालितविशालयन्त्रैर्नानोद्योगविकासः।।13।।
विविधा वायुयानसमवायाः सुविशाला जलपोताः।
अत्युत्तमा सैन्यसामग्री परितो देशे प्रोता।।14।।
परमनुदिनं विनश्यति लोकान्नैतिकता सुपवित्रा।
मिथ्याचारा भ्रष्टाचारा वर्धन्ते ह्यपवित्राः।।15।।
निर्दोषाणां नित्यं हत्या नित्यं राष्ट्रे स्तैन्यम्।
ईर्ष्याद्वेषौ तथा दस्युता विगतं जनसौजन्यम्।।16।।
गान्धिराज्यकल्पना पुरीवद् गन्धर्वाणां नष्टा।
देशोन्नत्यै त्यागभावना जनहृदयेऽत्र न शिष्टा।।17।।
स्वतन्त्रता- दिवसे दोषोऽयं तरसा निर्हरणीयः।
आगच्छति सुखदः प्रतिवर्षं व्रतक्षणो वरणीयः।।18।।

स्वतन्त्रतादिवसो.........



# युद्धं ततः प्रवृत्तम्

दयितः सखि यातः काश्मीरं युद्धं ततः प्रवृत्तम्।
चलं मनो मे भवत्यधीरं किमपि न लब्धं वृत्तम् ।।1।।
कार्गिलक्षेत्रं कपटाद्रिपुणा निजाधिकारे नीतम्।
तान् दूरयितुं देशशासकै रक्षाबलमानीतम्।।2।।
हिमाच्छादिताः पर्वतदेशा योजनानि विलसन्ति।
शृङ्गाणि च तेषामत्युच्चैरारोढुं कठिनानि।।3।।
तत्र शतघ्नीधरा निगूढाः प्रतिपक्षा विचरन्ति।
गुप्तमदृश्याः सुदृढकोष्ठकाद् गुलिकाभिर्वर्षन्ति।।4।।
मार्गे मार्गे धरणीगर्भे विस्फोटाः प्रभवन्ति।
असम्भवं गिरिशिखरे गमनं तथापि वीरा यान्ति।।5।।
परितो गर्ताः परितः खाता महाशिला अथ परितः।
विषमे पदारोपणं कठिनं ग्राव्णः स्खलनं परितः।।6।।
अधः सैनिका उपरि शत्रवो यत्र च योद्धुमशक्यम्।
वीरा अग्रेसराश्च तत्र सोत्साहैः किमशक्यम्।।7।।
कण्टकानि परितो ग्रावाणो गुल्मलताविस्तारः।
शत्रूणां गुलिका अथ परितः कथं भवति निस्तारः।।8।।
तत्र कथं मे दयितो विहरति किं खादति किं कुरुते।
प्राणरोधकं वायुं तत्र हिमवर्षं त्वथ सहते।।9।।
आयास्यति कदा मे तातो यदि पृच्छति मम बालः।
किं वदामि तं हृदि शोचन्त्याः सखि मम गच्छति कालः।।10।।
चिन्तायां मे निशा प्रयाति दिवा बुभुक्षा नास्ति।
रिपुणा वृथा रोपितं युद्धं निजक्षयस्तस्याऽस्ति।।11।।
सिंहगिरी रिपुहस्ताद् विजितो हृदि वीरा हृष्यन्ति।
सोत्साहा लोका नृत्यन्ति नेतारो नन्दन्ति।।12।।
तस्मिन् निहताः पञ्च शतानि युद्धेऽस्माकं वीराः।
आततायिनस्ततोऽधिकास्ते हता गताश्चाऽधीराः।।13।।

यद्यपि वीरगतिं ते प्राप्ताः कथं वियोगः सह्यः।
रोदिति माता रुदन्ति बालाः शोको भवत्यसह्यः।।14।।
नित्यं वीरशवा आयान्ति सम्मानैर्दह्यन्ते।
प्रणमन्तः प्लुतनेत्रा लोकाः शंसन्तः खिद्यन्ते।।15।।
दत्ता लक्षपरिमिता मुद्रा मृतपरिवारेष्वल्पा।
न हि तत् प्राणानां खलु मूल्यं कृतज्ञता सा स्वल्पा।।16।।
वीरान् लोका अथ नेतारो मन्त्रिगणाः प्रशशंसुः।
सम्मानात् कवयः कविताभिस्तेषां गुणान् शशंसुः।।17।।
कृत्वा मैत्रीं घातार्थं स शत्रुः स्वयं प्रवृत्तः।
किं न कृतघ्नस्तथा करोतु ख्यातो यो दुर्वृत्तः।।18।।
एवं प्रिया देशबलिवेद्यां समर्पितास्तैः प्राणाः।
अर्पितान्यङ्गानि च कैश्चिद् यद्यवशिष्टाः प्राणाः।।19।।
आततायिनां नगरे नगरे श्रुता अथाऽप्युत्पाताः।
हन्यन्ते निर्दोषा दुष्टैर्दिवा रक्तसम्पाताः।।20।।
समरे भीरुः पृष्ठघातकश्छलेन युद्धे निरतः।
हृदयदारकं कुर्वन् कृत्यं रिपुर्न पापाद् विरतः।।21।।
दयितः सखि यातः काश्मीरं युद्धं ततः प्रवृत्तम्।
चलं मनो मे धरति न धैर्यं प्राप्तं किमपि न वृत्तम्।।22।।



# विरमत रे

विरमत विरमत विरमत रे
निजदुष्कृत्याद् विरमत रे

अत्याहितं हि लज्जाजनकं
विनिन्दितं लोके भयजनकम्।
केनाऽप्यद्यावधि नाचरितं
युष्माभिर्यद्यत्त्वाचरितम्।।1।।
विरमत विरमत विरमत रे.....
आततायिनः पापकारिणः
पुंस्त्वविहीनाश्छद्मचारिणः।
शस्त्रधारिणः कुपथगामिनो
विरमत लोके दुःखदायिनः।।2।।
विरमत दुष्टा विरमत रे.....
बालवृद्धवनितासु च शूरा
यूयं चाण्डालेभ्यः क्रूराः।
भुजङ्गतुल्या विलेशयानाः
प्रेतभूतवेतालसमानाः।।3।।

गुप्ता वसन्ति कुत्राऽप्येते
प्राणघातिनो दुष्टा एते।
अन्तर्दयाविहीना अधमा
रणे पलायनशूरा एते।।4।।

भारत वीराः पश्यत रे
विरमत विरमत विरमत रे....

स्फोटितानि नयनानि निर्दयै-
र्दारितान्यङ्गानि निर्दयैः।
एतैर्ननु ललनानयनानि
तिक्तरसैर्विकृतिं नीतानि।।5।।

आत्मघातिनं बंविस्फोटं
जनसम्मर्दे ते कुर्वन्ति।
अङ्गविहीना मांसपिण्डवद्
इतस्ततो मुनजा निपतन्ति।।6।।

दुःखाद् भूपृष्ठे विलुठन्ति
केचित्त्वर्धमृता जीवन्ति।
कृतौषधाः केचिज्जीवन्ति
जीवनभारं ये च वहन्ति।।7।।

रोदिति माता पुत्रविहीना
रुदन्ति बाला मातृविहीनाः।
रुदन्ति महिलाः पतिभिर्हीना
दुःखान्निराश्रया अतिदीनाः।।8।।

सूर्यः पश्यति चन्द्रः पश्यति
मौनं तारागणः प्रपश्यति।
स्वर्गाद् गीर्वाणगणः प्रपश्यति।
नरनारीणां गणश्च पश्यति।।9।।

वज्रादपि कठोरं हृदयं
दयाविहीनमहो तद्धृदयम्
शस्त्रविहीने शूरा एते
सदैव पृष्ठे शूरा एते।।10।।



धरणी मलिना गगनं मलिनं
जगज्जनानां मुखं च मलिनम्।
एतेषां पापदतिमलिनाः
सर्वा दिशः सतिमिरा रे।।11।।
विरमत विरमत विरमत रे.....

देशे जने जने सन्तापो
विश्ववासिनां हृदये तापः।
परमेतेषां न हि परितापः
दुष्टानां क्व च पश्चात्तापः।।12।।
लोककलङ्का विरमत रे......

भारतवर्षशिरः काश्मीरं
रुचिरं केसरकुसुमसमीरम्।
प्राकृतसुन्दरतापरिपूर्णं
सुन्दरनरनारीपरिपूर्णम्।।13।।

आसीद् विद्यानां यद् गेहं
सहस्रशो विदुषामपि गेहम्
विद्याध्ययनकेन्द्रमिदमासीद्
भूमौ स्वर्गसमं त्विदमासीद्।।14।।

लोभात्तं देशं खलु दुष्टा
अभिलषन्त्यधिकर्तुमशिष्टाः।
रिपुप्रयत्नो विफलो भविता
यत्नाच्छान्तिरवश्यं भविता।।15।।
विरमत विरमत विरमत रे.....

रन्ध्राद् अन्धधियो गतवन्तः
कारगिलशृङ्गमधिकृतवन्तः।
ततः प्रवृत्तं तुमुलं युद्धं
यद्यपि तद् रणनीतिविरुद्धम्।।16।।

अधः सैनिका उपरि शत्रवश्-
शस्त्रधारिणो यथा दस्यवः।
विधृतगोलकाः सुदृढस्थितयो
जेतुमशक्यास्ते दुर्मतयः।।17।।

भारतवीरास्तत्काठिन्ये
तत्कालं गत्वा मतिमन्तः।
अस्त्रैः शस्त्रैर्बलेन बुद्ध्या
साहसान्निष्कासितवन्तः।।18।।

केचिद्धता नृशंसाः क्रूराः
केचिद् गताः पलायनशूराः।
तथापि दुष्टा न हि विरमन्ति
चौर्यादेव जनान् हिंसन्ति।।19।।

आश्रयन्ति ते धर्मस्थानं
केचिद् वा जनशून्यस्थानम्।
यद्वा बलेन निर्बलगेहं
चाक्रामन्ति विगतसन्देहम्।।20।।
देशवासिनः पश्यत रे
विरमत विरमत विरमत रे.....



राजनीतिनिपुणा नेतार-
श्चितानले रोटिकाः पचन्ति।
प्रधानमन्त्रिणं ते निन्दन्तो
सद्यस्त्यागपत्रमिच्छन्ति।।21।।

संसदि सम्मर्दं कुर्वन्ति
किमपि कस्यचिन्न हि शृण्वन्ति।
वचः कुठारैस्ते प्रहरन्तो
देशभक्तिमिव सञ्जनयन्ति।।22।

केचित् कोषधनं लुम्पन्ति
दीनमुखादन्नं छिन्दन्ति।
वनसम्पत्तिं विक्रीणन्ति
पश्वाहारमपि ते खादन्ति।।23।।
विरमत विरमत विरमत रे
निजदुष्कृत्याद् विरमत रे......

अद्य बाहुबलिनो वर्धन्ते
बहवो रणधीरा एधन्ते।
दीने बाहुबलं खल्वेषां
जनहत्यासु धैर्यमन्येषाम्।।24।।

ग्रामे ग्रामे ते प्रविशन्ति
नरसंहारं ते रचयन्ति।
बालान् वृद्धान् नो गणयन्तो
भयमुत्पाद्य खला अपयान्ति।।25।।

ज्वालयन्ति केचिद् भवनानि
ज्वालयन्ति केचिद् यानानि।
ज्वालिता जलजाभा बाला
विवर्धते हा दुःखज्ज्वाला।।26।।

धिक्कुर्वन्ति सज्जना एतान्
धिक् कुर्वन्ति बालका एतान्।
तथापि दुष्टा नो लज्जन्ते
सदा कुमार्गे सन्तिष्ठन्ते।।27।।

नाना कलाकृतिर्हस्ताभ्यां
विविधा आविष्कारा याभ्याम्।
जनसुखवृद्धिर्जाता याभ्यां
गलच्छेदनं क्रियते ताभ्याम्।।28।।

धातुर्मानवरचना श्रेष्ठा
जीवा अन्ये ततः कनिष्ठाः।
नाशयन्ति तानपि पापिष्ठा
दुष्टानां न हि काचिन्निष्ठा।।29।।
जगन्नियन्ता पश्यति रे।
विरमत विरमत विरमत रे......

अश्वाःश्वानो हया मर्कटाः
खराः सूकरा ग्रामकुक्कुटाः।
अन्धा मूकाः खञ्जपङ्गवो
रोगाक्रान्ता दीर्घमन्यवः।।30।।



हीनाङ्गाश्च भविष्यथ रे
विरमत चैतादृशदुष्कृत्या-
ज्जगन्नियन्ता पश्यति रे,
विरमत विरमत विरमत रे.....

पाकशासनः कुत्र स इन्द्रः
कंससूदनः कुतो व्रजेन्द्रः।
सहस्रबाहुहन्ता क्व च रामः
कुत्र दशाननहन्ता रामः।।31।।

हृत्परिवर्तनदक्षो बुद्धो
महावीर उत सुधीः प्रसिद्धः।
गान्धी वासीदन्तःशुद्धो
हन्तुं हनूमान् वा क्रुद्धः।।32।।

अद्य कोऽपि नागच्छति रे
विरमत विरमत विरमत रे.......
अत्रासन् वाल्मीकिर्व्यासः
कविश्च सूरस्तुलसीदासः।
शङ्कररामानुजचैतन्या
अन्ये सन्तः स्वनामधन्याः।।33।।

प्रशिक्षिता यैः शुद्धाचारा-
परोपकाराः शिष्टाचाराः।
अत्राऽभवंश्च वेदध्वनयो
भेरीघण्टाशङ्खध्वनयः।।34।।

इह नाऽनिष्टं विदधत रे
विरमत विरमत विरमत रे.....
तरवः सदा प्राणिहितनिरता
मृदुगायन्ति विहङ्गा मिलिताः।
उपविशन्ति पशवः सम्मिलिताः
स्नेहं दर्शयन्ति परितुष्टाः।।35।।

अरे नृशंसाः पश्यत रे
विरमत विरमत विरमत रे.....

युद्ध्यन्ते स्म सम्मुखं वीराः
शस्त्रिभिरेव शस्त्रिणो धीराः।
नो निःशस्त्रं कश्चिद्धतवान्
भारतवर्षे कदापि मतिमान्।।36।।

गजिभिर्गजिनो हयिभिर्हयिनो
पदातिभिर्युयुधुः पदातिनः।
युयुधुर्युद्धे रथिभी रथिनो
निःशस्त्रैर्न कदापि शस्त्रिणः।।37।।

स्वतन्त्रता-युद्धे सेनान्यो
युयुधुर्भारतवर्षे मान्याः।
शस्त्रैर्विना शस्त्रिभिर्धन्या
वीरेष्वभवन् सदाग्रगण्याः।।38।।

समर्पिताः प्राणा बलिवेद्यां
पृष्ठं दत्तं नहि रणभूम्याम्।
सहस्रशो निहता खलु बलिनो
वीराःकालेऽभवन् विजयिनः।।39।।



सत्यं कथं न पश्यत रे
विरमत विरमत विरमत रे......
गान्धी राष्ट्रपिता देवात्मा
दुःखनिवारणरतो महात्मा
एकवस्त्र-लकुटप्रसाधनः
प्रजाः सिषेवे मूलफलाशनः।।40।।

भारतदेशप्रधानमन्त्री
सरलो लालबहादुरशास्त्री।
योऽसौ त्यागी युद्धविजेता
ह्यासीत् प्रजासेवको नेता।।41।।

चाणक्योऽभूत् कुटी निवासी
त्यागी सदा न्यायविश्वासी।
लोकप्रियः कूटनीतिज्ञः
प्रधानमन्त्री त्विह शास्त्रज्ञः।।42।।

एतान् भूयः पश्यत रे
विरमत विरमत विरमत रे......

परमेश्वरस्य पुत्राः सर्वे
तस्मान् मिथो भ्रातरः सर्वे।
भ्राता सदा भ्रातरं रक्षति
सापराधमपि नो विनिहन्ति।।43।।

कस्मिन् धर्मे कदोपदिष्टा
मानवहिंसा सततमनिष्टा।
धर्मविरुद्धा मार्गभ्रष्टा
भवन्ति पापात् स्वयं विनष्टाः।।44।।

हन्तव्या उत वाततायिनो
हत्यारञ्जितकराः पापिनः।
आततायिनां वधे न दोषः
एतेषां निधनाज्जनतोषः।।45।।

युवतीयुवकाः सन्तः सुधियो
विद्वांसो रससिद्धाः कवयः।
व्याख्यातारो रचनाकारा
विख्याताश्च विश्वनेतारः।।46।।
निद्रां त्यक्त्वा जाग्रत रे.....

विहाय बाह्यं भोगविलासं
लोभं मोहं सत्याभासम्।
सेवध्वं तं विश्वावासं
जनजनहृदये सदाप्रकाशम्।।47।।
निजदुष्कृत्याद् विरमत रे
विरमत विरमत विरमत रे......

अहो समर्थेऽमरिकादेशे
नगरे सम्पन्ने न्यूयार्के।
शतभूमिकभवनानां ध्वंसो
बंविस्फोटैः सहसा विहितः।।48।।

बालवृद्धयुवका अथ वनिता
सहस्रशस्तन्मध्ये निहताः।
सहस्रशो देहार्धज्वलिता



अत्युच्चैः कूर्दित्वा पतिताः।।49।।
तदुपरिभवनभित्तयः पतिताः
सहस्रशस्ते चाग्नौ क्वथिताः।
श्वासनिरोधात्ते निष्प्राणा
नगरवासिनां कण्ठे प्राणाः।।50।।

महाज्वालया तदा प्रकाशो
धूमैराच्छादित आकाशः।
आच्छादितं भस्मभिर्नगरं
भस्मसादभवत्तद् भवनम्।।51।।

सर्वत्रासीद्धाहाकारो
महारोदनं जनधिक्कारः।
ववर्ष सलिलं बहुधाराभिः।
प्रकृती रुदोदाश्रुधाराभिः।।52।।

जाताः सर्वे देशाः स्तब्धा
लोकैः प्रतीकार आरब्धः।
पापैर्बुद्धिविनाशो येषां
शीघ्रं भवति विनाशस्तेषाम्।।53।।

एतत् सत्यं पश्यत रे
निजदुष्कृत्याद् विरमत रे.....

## द्वाभ्यां निमिषाभ्याम्

अद्यत्वे किं स्मरिष्यन्ति त्रिपुरारिं महेश्वरम्।
दग्धुं पुरत्रयं द्वाभ्यां निमिषाभ्यां क्षमा नराः।।1।।

परह्यः खातयुद्धेषु किं न जातं विनिन्दितम्।
नेत्रे निमील्य सर्वत्र विषवज्रस्य वर्षणम्।।2।।

गेहहर्म्यकुटीशाला- पण्यापण-पुराङ्गणे।
वसतौ तैलकूपेषु सर्वतोऽनलवर्षणम्।।3।।

शतशो ध्वस्तगेहानामधस्ताद् विनिवेशिताः।
श्वासरोधान्मृता लोका युद्धाचाराः कुतो गताः।।4।।

युगेभ्यो युद्धमाहात्म्यमासीद् यद्यपि भूतले।
नियमा विहिताः केचिद् युद्धविद्धिर्युगे युगे।।5।।

शस्त्रक्षतभटानां च चिकित्सानियमावली।
पाल्यते काऽपि विद्वद्भिः समुदारा हितावहा।।6।।

आक्रान्तिश्च निषिद्धाऽऽस्ते वन्दियानेषु यत्नतः।
कुत्र वा कति वा तेषु नियमाःप्रतिपालिताः ।।7।।

क्रोशन्तो वेदनाक्रान्तास्तत्प्रभावाद् विचक्षुषः।
शतशोऽद्यापि जीवन्ति देहभारं वहन्ति च ।।8।।

संग्रामरसिकाः क्रूरा विनाशे सुखमानिनः।
नरशोणितधारासु यूयं स्नातुं समुत्सुकाः।।9।।



यथा विकिरथाऽस्थीनि मानवानां प्रयत्नतः।
प्रदातुं सुखसम्भारान् तथा किं न कृतश्रमाः।।10।।

आग्नेयचूर्णवर्षाभिर्न यूयं केवलं रिपून्।
दग्धुमीशाः क्षणेऽन्यस्मिन् स्वयं तत्र ज्वलिष्यथ।।11।।

अत्र सर्वेषु नष्टेषु भवेयुर्यदि केचन।
मूकान्धपङ्गवस्ते स्युः शिवस्येव गणा भुवि।।12।।

# भारतसंस्कृतिर्विजयते

दोषाणां परिमार्जनादथ गुणाधानाच्छनैर्यत्नतः
संस्काराः प्रभवन्ति वै नियमतस्त्यागेन जीवात्मनि।
आचाराश्च यतो हिताय जगतां सौख्यं यतो जायते
सेयं भारतसंस्कृतिर्विजयते शुद्धा सतामिष्टदा।।1।।

वेदान् यत्र मुदा ददाति विधये पद्मासनायेश्वरः
ज्ञानार्थं मुनयः सहस्रशरदो ध्यानं यतः कुर्वते।
भूपो यत्र मनुः सुधीर्दिशति वै धर्मं प्रजाः पालयन्
सेयं भारतसंस्कृतिर्विजयते सच्छास्त्रमार्गाश्रिता।।2।।

सत्यान्वेषणतत्पराः सुमतयो हिंसाघृणावर्जिता
ईर्ष्याद्वेषविमोहमानरहिता मुक्ताः सदा बन्धनात्।
आचारं प्रदिशन्ति यत्र सततं लोकाय सूक्ष्मेक्षणाः
सेयं भारतसंस्कृतिः परिगता भूयान् नृणां श्रेयसे।।3।।

यत्रालौकिकलौकिकोभयविधा पुंसां भवेदुन्नतिः
सार्धं व्यक्तिसमाजयोरभिमतं निःश्रेयसं सन्ततम्।
आचारा महतां सतामनुदिनं यत्राऽभवन् सेविताः
सेयं भारतसंस्कृतिर्विजयते कर्तव्यरूपा नृणाम्।।4।।

दृष्ट्वा क्रौञ्चवधं दयार्द्रहृदयो लोकाय चिन्तापरो
यत्राभून्निरतो विशुद्धचरितो देवर्षिणा प्रेरितः।
वाल्मीकिर्लिखितुं विभोः सुचरितं रामायणाख्यानकं
सैषा भारतसंस्कृतिः सकरुणा निःश्रेयसाय स्मृता।।5।।



श्रीमन्तः सगरस्य यत्र तनयाश्चक्रुर्विशालार्णवं
गङ्गा यत्र भगीरथेन तपसा पृथ्व्यां समानीयत।
कृष्ट्वा यत्र पृथुर्दुदोह पृथिवीं सर्वौषधीर्यत्नवान्
सेयं भारतसंस्कृतिर्विजयते कर्मात्मिका श्रेयसे।।6।।

एकं लोम जहाति धातृभरणे स्वाङ्गस्य वै लोमशो
मार्कण्डेयसमा भवन्ति मुनयो कल्पान्त-सन्दर्शिनः।
अङ्गुष्ठप्रतिमाश्च यत्र मुनयः श्रीबालखिल्यादयः
सेयं भारतसंस्कृतिर्विजयते दिव्यप्रभैर्ज्ञानिभिः।।7।।

दष्टो मर्मणि दंष्ट्रिभिः सुनिशितैः शस्त्रैश्च सम्पीडितः
प्रक्षिप्तो शिखराद् गिरेर्जलनिधौ क्षिप्तोऽग्निकुण्डेऽपि च।
प्रह्लादो न ममार यत्र सदयं श्रीविष्णुना रक्षितः
सेयं भारतसंस्कृतिर्विजयते भक्तिस्वरैः पूरिता।।8।।

एकेन क्रमणेन यत्र हनुमान् बाल्ये रविं जग्रसे
हस्तेनैकमितेन रामसविधे द्रोणाचलं प्रापयत्।
एकेनैव पदेन मार्गपतितं प्रोल्लङ्घ्य सिन्धुं गतः
सेयं भारतसंस्कृतेः सुमहिमा योगानुगा भासते।।9।।

यत्रासौ मिथिलाधिराजतनया साध्वी वनं प्रस्थिता
सङ्गं पत्युरवाप्य घोरविपिनं मेने च राज्याधिकम्।
धीरोवास हि वत्सरं रिपुगृहे वाट्यां विहायाशनं
सेयं भारतसंस्कृतिर्विजयते नारीयशोधारिता ।।10।।

सावित्री तपसाऽनयद् यमपुरात् पत्युः परेतानसून्
विष्णुब्रह्मशिवान् शिशूनिव सती यत्राऽनसूया व्यधात्।
गार्गी ब्रह्मविचारसंसदि सुधीर्यत्राऽग्रगण्याऽभवत्
सेयं भारत-संस्कृतिःसुविमला नृणां भवेच्छ्रेयसे ।।11

रामे शासति नित्यपुष्पफलदा आसन् वरानोकहा
वर्णाः स्वाश्रमधर्मपालनरताः स्वस्थाः स्वसत्यव्रताः।
नासीत् किञ्च भुजङ्गदस्युजभयं यत्र प्रजासु क्षणं
सेयं भारतसंस्कृतिर्गतभया सत्कर्म-शिक्षाप्रदा ।।12।।

अङ्गुल्यैव दधार पर्वतवरं गोवर्धनं यत्र वै
सप्ताब्दश्च दिनानि सप्त भगवान् भक्तार्थ-लीलाधरः।
यत्राहेः प्रणनर्त मूर्धनि विभुर्लोकाद् भयं दूरयन्
सेयं भारतसंस्कृतिर्विजयते श्रीकृष्णलीलान्विता।।13।।

पार्थं वै सुहृदं रणादुपरतं सैन्यद्वयान्तःस्थितं
दीनं वीक्ष्य दयायुतः स भगवानज्ञाननाशाय वै।
आत्मज्ञानपरां ददावनुपमां गीतां यदीयाञ्चले
सेयं भारतसंस्कृतिस्तनुभृतामज्ञान-हानिक्षमा।।14।।

यत्रार्यश्च कुमारिलः प्रतिभया नास्तिक्यतां खण्डयन्
वेदान् निर्भय उद्दधार मतिमाञ् शिष्यैःप्रशिष्यैः सह।
सन्तापाच्च तुषानले स्वमजुहोद् द्रोहं गुरोः संस्मरन्
सेयं भारतसंस्कृतिः सुपरमा त्यागात्मिका सर्वदा।।15।।

आद्यो यत्र च शङ्करः शिवनिभस्तेजोनिधिर्बाल्यतः
संन्यासं वरयाञ्चकार मतिमान् मातुर्निदेशात् परम्।
अद्वैतामृतवर्षणेन मनुजान् ज्ञानेन चातोषयत्
सेयं भारतसंस्कृतिस्तनुभृतां ज्ञानाय जीवेच्चिरम् ।।16।।

चैतन्यो व्यतरच्च भक्तिनिरतः श्रीकृष्णनामामृतं
भक्तिं ज्ञानसुधाप्लुतामकथयद् विद्वांश्च रामानुजः।
श्रेष्ठां पुष्टिमुवाच यत्र भगवान् श्रीवल्लभोऽनुग्रहं
सेयं भारतसंस्कृती रसमयी प्रज्ञानगङ्गाम्बुभिः।। 17।।



यत्र श्रीतुलसी जगाद सगुणं रामस्वरूपं शुभं
ज्ञानं निर्गुणमाजगाद परमं योगी कबीरः कविः।
ब्रह्म-प्रेममयं जनेष्वनुगतं चेत्यब्रवीन्नानकः
सेयं भारतसंस्कृतिर्विजयते ब्रह्मानुभूत्यन्विता।।18।।

विष्णुब्रह्मशिवा गणेशसहिता दुर्गारमाशारदाः
पूज्यन्तेऽखिलभारते प्रतिदिशं सर्वत्र देशे समम्।
यत्रेमाः स्मृतयः पुराणमहिमा स्फारश्च वेदध्वनिः
सेयं भारतसंस्कृतिर्विजयते पूजास्वरूपा शुभा।।19।।

धर्मो यत्र च हीयतेऽवनितलेऽधर्मश्च संवर्धते
पीड्यन्ते सुजना यदापि सुखिनो दुष्टाः खला दुर्जनाः।
आयात्यत्र नृविग्रहो हि भगवान् सर्वेश्वरो रक्षितुं
सेयं भारतसंस्कृतिर्भगवतो जीयाद् भुजै रक्षिता।।20।।

ज्ञात्वा रामपराक्रमं च सुदृढं सत्याय रामायणे
गान्धी सत्यबलेन निर्बलतनुर्म्लेच्छैः सहाऽयुध्यत।
अह्नायैव जिगाय तानतिबलान् सैन्यैः समेतानसौ
सेयं स्वात्मबलान्विता विजयते सत्यान्विता संस्कृतिः।।21।।

धर्मो यत्र सनातनः श्रुतिभृतो नार्थोपलब्ध्यै मतो
धर्मस्याऽस्य न चोच्यते क्वचिदहो कामोपलब्धिः फलम्।
त्यागायैष समीरितोऽथ तपसे लोकोपकाराय वा
सेयं भारतसंस्कृतिर्विजयते धर्माम्बुभिः पूरिता।।22।।

# मातृगृहम्

प्रान्तोत्तमो भारतभूमिमण्डले मध्यप्रदेशो रमणीयतानिधिः।
शीतो न चोष्णो न च दुष्प्रभञ्जनः सपत्नहीनो निरुपद्रवः सदा।।1।।
पुण्योदका मेकलकन्यका शुभा शोणा दशार्णा सुभगा सुवर्णदा।
शिप्रा तथा वेत्रवती महानदी वहन्ति पुण्याय सुखाय यत्र वै।।2।।
सिञ्चन्त्य एताः सलिलैः पयोनिभैर्वृक्षान् स्वभावादिव मातरः सुतान्।
कुर्वन्ति सस्यैः फलमूलकन्दकैरेतं प्रदेशं सुसमृद्धिशालिनम्।।3।।
विन्ध्याचलो यत्र सहस्रसानुमान् नभः स्पृशन्नुच्चतमो विराजते।
वसुन्धराया अपि धारणादयं धराधरः सार्थकनामधेयकः।।4।।
अद्यापि शेते शतयोजनाधिकस्तथा विनम्रोऽपि विशालविग्रहः।
यद्यप्ययं ग्रावसहस्रदुर्गमः प्राण्याश्रयो मूलफलैरनोकहैः।।5।।
स्पृशत्ययं पूर्वत उत्कलस्थलं मरुस्थलं पश्चिमतः सगुर्जरम्।
महत्तटं दक्षिणतः स नार्मदं तथोत्तरे यामुनगाङ्गभूतलम्।।6।।
दक्षात्मजाया मृतदेहयष्टिकां पूतां समादाय चचार यस्य वै।
शृङ्गेषु शम्भुर्विरहाकुलः पुरा मनोविनोदाय समाः सहस्रकम्।।7।।
अङ्गानि पेतुर्हरिचक्रधारया छिन्नानि सत्या भुवि यत्र कुत्रचित्।
कल्याणहेतोः खलु तत्र तत्र वै जातानि पीठानि तपस्विनां कृते ।।8।।
विन्ध्याद्रिसानौ सतनाऽऽख्यमण्डले पूर्वोत्तरे मातृगृहं* नभःस्पृशत्।
पूर्वोन्मुखी यत्र च कृष्णाविग्रहा श्रीशारदाम्बाष्टभुजा प्रतिष्ठिता ।।9।।
शशास राजा रघुवीर आत्मवान् पुराऽग्रणीः क्षत्रियराजवंशजः।
यः शारदामत्र निजेष्टदेवतामाराधयामास परम्परागताम्।।10।।
तालैस्तमालैः पनसैः सकिंशुकैः प्लक्षैरशोकैस्तिलकैः सकेतकैः।
नीपैर्मधूकैः खदिरैश्च राजितं विराजतेऽदः परितो महद् वनम्।।11।।
सेवन्तिकावकुलचम्पक-कर्णिकारपुन्नागजाति-हरिचन्दन-सिन्धुकानाम्।
नीपाम्रचम्पकसुमल्लिककिंशुकानामादाय गन्धमिह वाति सदा समीरः ।।12।।

*'मैहर' इति प्रसिद्धं शक्तिपीठम्।



क्वचिद् रसाले कलकोकिलध्वनिः क्वचित् सुरम्यः शुकसारिकास्वनः।
सरस्तटे सारसकेङ्करः क्वचित् क्वचिन्नदी-निर्झरझङ्कृतेः श्रुतिः।।13।।
आल्हा महोबाधिपतिः सरस्तटे तेपे तपस्तीव्रतमं समाधिमान्।
आराध्य देवीं वरमिष्टमाप्तवान् तस्यैव नाम्नाऽत्र सरोवरं स्थितम् ।।14।।
उच्चानि सोपानशतानि सप्त वै लसन्ति देव्या गिरिकूटलब्धये।
शनैःशनैः सप्तशती-शुचिस्तुतेः श्लोका इवावर्तयितुं स्वसिद्धये।।15।।
यत्रोत्पलाभाः शिशवः किशोरकाः सरोजकान्त्यो ललना मृगीदृशः।
उत्साहवन्तस्तरुणा बलान्विता वृद्धास्तथा जर्जरदेहयष्टयः।।16।।
आलोकयन्तः सुषमां समन्ततो न मानयन्तश्च कलेवरश्रमम्।
उद्यान्त्यहंपूर्विकया शुचिस्मिता देव्याः पदाम्भोरुहदर्शनोत्सुकाः।।17।।
पदे पदे नामजपो मलापहः क्षणे क्षणे पादसरोजचिन्तनम्।
क्षणे क्षणे प्राकृतवैभवेक्षणं कणे कणे यत्र च मातृदर्शनम्।।18।।
उच्चैश्चलद्भिः पवनेरितैर्ध्वजैर्दीर्घैस्त्रिशूलैः सुमचन्दनार्चितैः।
सुगन्धिधूमैः कुसुमैर्जलैः फलैर्दीपावलीभिश्च विभाति मन्दिरम् ।।19।।
प्रातः स्वयात्रामिषतः परिभ्रमन्नागत्य भास्वानपि कोमलैः करैः।
भक्त्यानतः संसृतितारणक्षमौ मन्येऽन्वहं लालयतीह तत्पदौ।।20।।
प्रत्यग्र- पुष्पाण्यवलोक्य विस्मिता अहर्मुखे पूर्वमुपस्थिता जनाः।
समागतानत्र पवित्रविग्रहान् केचित्तु सिद्धानपि कल्पयन्ति।।21।।
ढक्का - मृदङ्गानक-भेरिडिण्डिमैर्मञ्जीरवाद्यैर्मुरलीमृदुस्वनैः।
उच्चैस्तरं भावनया समुत्सुका गायन्ति लोकाश्च समाधिनिष्ठया।।22।।
जयाम्बिके देवगणाधिपूजिते गणेशमातर्जय षण्मुखाम्बिके।
दीनेषु नित्यं दयसे दयामयी दुःखार्णवात् पासि सुखप्रदेक्षणात्।।23।।
दूर्वा-हरिद्राक्षतगन्धकुङ्कुमैरन्नोपहारैः कदलीफलैः सुमैः।
जम्बीरपूगीफलनारिकेलकैः प्रपूज्य भक्ताः प्रणमन्ति मातरम्।।24।।
केचित् स्थिता आयसकीलकासने पृष्ठेषु शूलान्यपि पातयन्त्यहो।
उदग्रशूलानि निवेश्य चानने मातुः प्रसादाज्जनयन्ति कौतुकम् ।।25।।
सरित्तडिद्-भूमिमरुद्धराधरक्षपाकरार्कोदधि- वह्निवारिषु।
समं स्थिता यद्यपि सा चिदात्मिका तथापि तीर्थे सुलभेति भाविता ।।26।।

अस्योत्तरे किञ्चन पश्चिमे गिरौ स चित्रकूटः कमनीयकूटवान्।
अनोकहैः पुष्पफलान्वितैश्च यो जलप्रपातैश्च सदा सुखावहः ।।27।।
यत्रावसद् दाशरथिः सलक्ष्मणः सीतासमेतः सुखयन् जनान् वने।
यत्र प्रशान्तोऽत्रिमुनेः शुभाश्रमो मन्दाकिनी यत्र च शीतलोदका ।।28।।
पूर्वोत्तरस्यां दिशि मीरजापुरे[1] लक्ष्मीस्वरूपा भुवि विन्ध्यवासिनी।
पद्मासनस्था तिसृभिः स्वशक्तिभिः प्रत्यङ्मुखी सानुगता विराजते ।।29।।
सिंहस्थिता राजगिरौ[2] मनोहरे नैर्ऋत्यकोणे हरसिद्धिनामतः।
पीताम्बरा पद्मवतीपुरे[3] स्थिता वायव्यकोणे बगलामुखी च सा ।।30।।
दिशि प्रतीच्यामपि मालवाञ्चले क्षिप्रातटेऽसौ हरसिद्धिनामतः।
प्रपूज्यते विक्रमराजपूजिता यन्त्रस्वरूपा निजशक्तिभिर्युता।।31।।

1. मीरः- समुद्रः तस्माज्जाता मीरजा लक्ष्मीः
2. रानगिरि इति सागरमण्डले प्रसिद्धं स्थानम्
3. दतिया ( म.प्र. )



# चैत्रिणः श्रमिकाः

इमे चैत्रिणस्त्यक्तनिकेता
आयाताः परिजनैः समेताः।
चैत्रे प्रतिवत्सरमायान्ति
वृत्त्यर्थं दूरादायान्ति।।1।।

उपस्करान् निजमूर्ध्नि दधाना
बालशिशूनङ्के विदधानाः।
सोत्साहा ग्रामानायान्ति
लवनार्थं निःस्वा आयान्ति।।2।।

क्वचिदुद्याने सह निवसन्तो
गृहमिव तत्र सुखेन वसन्ति।
उदरबुभुक्षामभिजानन्तो
नान्यत् किञ्चित् ते जानन्ति।।3।।

प्रातः प्रतिदिनमुत्तिष्ठन्ति
फलितं क्षेत्रं ते वाञ्छन्ति।
तरणितिग्मतां नो गणयन्तो
आदिवसं क्षेत्रं च लुनन्ति।।4।।

घर्मे भुवि शिशवश्च शेरते
बालाः क्रीडां रजसि कुर्वते।
जनन्य एषां निरता लवने
मध्ये विश्रान्तिं न कुर्वते।।5।।

सायं सूर्पविशोधितमन्नं
पेषण्या ललना पिंशन्ति।
इन्धनमितस्ततश्चानीय
पुरुषाश्चुल्लीं ते धुन्वन्ति।।6।।

क्वचिद् बाटिकाः क्वचिद् रोटिकाः
क्वचिच्च वृन्ताकालुकशाकाः।
क्वचिच्च बदरीकपित्थगन्धः
कुस्तुम्बर्यामलकीगन्धः।।7।।

एवं ते मिलिता अश्नन्तो
रसानुभूतिं भुवि तन्वन्तः।
वार्ता मिथः कथाः कथयन्तो
वाहयन्ति समयं विहसन्तः।।8।।

सङ्कलितान् गोधूमांश्च चणकान्
सौविध्यार्थं यद् विपणन्ति।
वणिग्जनाः परवञ्चनमतयो
न्यूनैर्मूल्यैस्तान् क्रीणन्ति।।9।।

स्वभावसरला निःस्वा एते
हृदये जलवद् विमला एते।
प्रवञ्चिता नो जानन्त्येते
कठिनं श्रमं च जानन्त्येते।।10।।

दुःखं सुखमिव भुवि गणयन्तः
सुखं न किञ्चिद् हृदि जानन्तः।
महान्त एते जगतः सन्तो
ब्रह्मज्ञा इव भुवि विचरन्तः।।11।।

इमे चैत्रका भुक्तरोटिकाः
कतिचिद् दिवसान् विहितगीतकाः।
बालकयुवतीयुवकैः सहिताः
क्षेत्रे कृत्ते यान्ति निवृत्ताः।।12।।

प्रतिवर्षं कुतः समायान्ति
न ज्ञातं कुत्र ततो यान्ति।
अनिश्चितं जीवनमेतेषां
विषमा खलु नियतिश्चैतेषाम्।।13।।



# होलिका

समागता पुनरियं होलिका
नववसन्त - सन्देशवाहिका।
उदासीनजन-मनोरञ्जिका
नृणामनुत्तम-सौख्यदायिका।।1।।

दिनमणि- किरणेष्वपूर्वराग-
स्तडागसलिले वहति परागः।
पद्मिनीषु विलसति नवरागः
षट्पदवृन्दे गुञ्जनरागः।।2।।

भाति नदी निर्झरसङ्गीतं
भृङ्गाह्वानं निर्झरगीतम्।
एतन्मन्दसमीरणगीतं
ललनानामपि मधुरं गीतम्।।3।।

रञ्जितवासा रञ्जितचेता
रङ्गमवीरं वर्षति लोकः।
निघ्नन् मुरजं गायन् गीतं
सर्वो नृत्यत्यतीतशोकः।।4।।

क्षुद्दरिद्रता-पङ्कवितानं
सर्वं त्यक्त्वा वृथाभिमानम्।
निजश्रमैरन्विष्य निदानं
कुरुते कुसुमाकरसम्मानम्।।5।।

वृन्दावनविपिने व्रजराजो
दिने दिने जनमनोरञ्जकः।
स्नेहमूर्तिभिर्व्रजगोपीभि-
श्चिक्रीडास्मिन्नन्दबालकः।।6।।

कश्चिद्धनी नाधनो वास्यां
विप्रो भूपः शूद्रो नास्याम्।
अभिन्नरूपा मिलिताः सत्यं
जनाः कुर्वते मधुवरिवस्याम्।।7।।

वह्नौ दग्धा मृषा होलिका
सत्यं दग्धुं कोऽपि न शक्तः।
धृतसत्यानामियं होलिका
गतसत्यानां गता होलिका।।8।।

प्रवर्वते पुनरियं होलिका
जने जने विश्रम्भ-दीपिका।
मोदमसृण-रसबिन्दुवर्षिका
हरिभक्तानां मनःकर्षिका।।9।।



# ऋतुगीतम्

वचः कठोरं वद नात्र चातक
भर्तुर्वियोगे कुसुमेषुवर्धनम्।
स्वातेर्जलं वाञ्छसि केवलं यथा
तथा प्रियं मे प्रियदर्शनं खग।।1।।

निजस्य पापिन् मनुषे हिताय वै
मनोभवोऽतितरां प्रवर्धते।
गोपाङ्गनानां विरहे च वैरिणी
प्रावृड् दुरन्ता मिलिता त्वियं कदा।।2।।

विद्योतते विद्युदियं क्षणे क्षणे
मद्वाचिकं कः कथयेत् प्रियाय मे।
दिवानिशं व्याकुलिता वियोगिनी
को वा वदेत् खिद्यति दर्शनं विना।।3।।

कालाम्बुदा दिक्षु विदिक्षु सन्नताः
केकायुता नृत्तपराः कलापिनः।
कस्मै वदेयं मनसश्च वेदनां
प्रियं विना मे हृदयं विदीर्यते।।4।।

आयाहि नाथ व्रजगोपबालक
मनोहरश्चेतसि निश्छलं मम।
वर्षाणि यावन्निजसेविकां कथं
क्लिश्नासि दीनां मिल दर्शनोत्सुकाम्।।5।।

# प्रावृट्कालाः

प्रावृट्कालाः सुप्रतीक्षिताः संप्राप्ता अभिलषिताः
पवनसहाया श्यामलजलदा गगने दृष्टा ललिताः।

वियोगिनां संदेशवाहकाः श्यामा इमे नीरदाः
नैते जडाश्चेतना नूनं सर्वेभ्यो जीवनदाः।

भाराधिक्याद् गिरिकूटेषु स्थित्वा पुनः प्रयान्ति
केचिदुदारा प्राणिहितार्थं वारि तत्र वितरन्ति।

पीत्वा रसमब्धेरथ भूमेर्नव मासान् दिननाथः
मेघद्वारा तदु प्रजार्थं गमयतीव नरनाथः।

क्वचित् पाण्डुराः क्वचित् सुनीलाः क्वचिदाताम्राः सरसाः
वज्राद् भीता इव शैलेन्द्रा उड्डीयन्ते तरसा।

दुन्दुभिघोषैर्गर्जन्त्यग्रे स्फोटयन्त इव कर्णम्
मध्ये नृत्यति विद्युदुज्ज्वला चपला तत्राभीक्ष्णम्।

धारासारैर्ववृषुर्मेघा हर्षध्वनिभिः सहिताः
जहृषुः प्राणिभृतो भूलोके लोकाश्चिन्तारहिताः।
प्रावृट्कालाः सुप्रतीक्षिताः ............।।1।।

दिवि पानीयं भुवि पानीयं वहतेऽधः पानीयम्
पश्यति चक्षुर्यावद्देशं स्थितं तत्र पानीयम्।



अवनेस्तीव्रपिपासा शान्ता परितापः परिशान्तः
आतपतप्तं मनः प्रशान्तं भूलोकोऽयं शान्तः।
कृष्णं जलदं वीक्ष्य नूतनं हरिदङ्कुरनिकुरम्बा
चिरवियोगिनी गोपी वसुधा प्रेम्णाऽभूत् सकदम्बा।

गेहं प्रति चलिताः प्रवासिनोऽनेके मार्गा रुद्धाः
गेहिन्यः काश्चिद् विरहिण्यो गेहेष्वेव निरुद्धाः।

इदं महार्हं स्फुरद् दुकूलं प्रकृतिर्नवं दधाना
कुसुममण्डना नवसुमहस्ता स्वामिनमिवेक्षमाणा।

दर्पण इव निर्मले तडागे नव-किसलय-परिधानाः
पश्यन्तीव च निजशृङ्गारं तरवस्तत्रासन्नाः।

शिशिरे शीतंसहा य आसन् ग्रीष्मे घर्मातप्ताः
दिवानिशं यतितुल्यास्तरवो वर्षायामपि सुस्थाः।
प्रावृट्कालाः सुप्रतीक्षिताः.........।।2।।

नाक्षिगोचरं रजः कुतश्चित् तथापि मलिनं गगनम्
जनमानसमिव विषयासक्तं क्व भवेत् पुण्यायतनम्।

यावद्दिनं प्रवर्षति जलदे पङ्क्त्या बद्धा ललना
विदधति धान्यारोपं क्षेत्रे शतशो जलार्द्रवसनाः।

वर्षासु प्रवहति पानीये शिरसि बिन्दुभिः सिक्ताः
कूर्दन्तो धावन्तो बाला वीक्ष्याः क्रीडासक्ताः।

क्वचित् खगा भूमीगत -सलिले चालितपक्षा दृष्टाः
उड्डीयोड्डीयास्मिन् स्नान्तश्चुङ् कुर्वन्तो हृष्टाः।

स्वप्रतिबिम्बं वीक्ष्य विस्मयाद् वृक्षात् पुनरवरूढाः
तोये वानरशिशवः कोऽसाविति पश्यन्ति विमूढाः।

दृश्यं क्वचित् क्वचिच्चादृश्यं घटते जगत् क्षणेन
क्षणेन वर्षाः क्षणादातपः सुरधनुरपि क्षणेन।

नक्षत्रैः सह नक्षत्रेशो निशि मेघेष्वन्तरितः
आवेदयितुं निजं प्रभावं खद्योतश्चापतितः।
प्रावृट्कालाः सुप्रतीक्षिताः .........।।3।।

नभसि नभस्ये सतिमिरपक्षे निशि किञ्चिन्नहि वीक्ष्यम्
कुतूहलादिव करधृतदीपा तडिद् वीक्षतेऽभीक्ष्णम्।

क्षुद्राः सरितः प्रचुरफेनिलास्तीव्ररया वहन्ति
दीर्घारावा दीर्घोत्पाता महानदीर्विहसन्ति।

ग्रामाध्वनः सान्द्रतरपङ्कान् कः पारयतु वदान्यः
बिलमिव पादः प्रविशत्येको बहिरायाति न चान्यः।

संवसथग्रामटिकामार्गाः संहतयवसाच्छन्नाः
पाषण्डैरिव पुराणधर्माः कलिकाले सञ्छन्नाः।

मुद्गमाषनीवारबर्जरीभूमिफलीश्यामाकैः
हरिता भूमिः सुखं प्रेक्ष्यते चितवाञ्छापरिपाकैः।



जलदरसितमाकर्ण्य गभीरं प्रियासमक्षं मुखराः
केकाभिर्विस्तारितबर्हा नर्तनपरा मयूराः।

पान्थश्रमं हरन्तो रम्याः सरितां महाप्रपाताः
भान्ति दधाना वर्षा-कान्तिं तोयकणैरवदाताः।
प्रावृट्कालाः सुप्रतीक्षिताः.........।।4।।

जम्बूफलानि वृक्षादुच्चैरतिनीलानि पतन्ति
पक्वान्याम्रफलान्युद्याने गन्धैर्मनो हरन्ति।

नीचैर्बाला उपरि च कीराः कृतकलशब्दास्तुष्टाः
समास्वाद्य तं रसं फलानां मोदन्ते परपुष्टाः।

सावेगाः प्रबलाः सरजस्का गिरिसरितः प्रवहन्ति
वृक्षानथ तटदेशमृत्तिका उटजानपि निखनन्ति।

अश्वा गावश्छागा भित्तेः कोणस्थाः सङ्कुचिताः
किन्तु महिष्यो बिन्द्वाघाते लघु रोमन्थे निरताः।

आर्द्रा चुल्ली विष्टरमार्द्रं निखिला भूमिः क्लिन्ना
सर्वत्र च्यवते पानीयं पत्नी भवति विषण्णा।

क्षुधिता बाला रुदन्ति गेहे नोपवेशनस्थानम्
वर्षति जले श्रमार्थं लोकः कुर्यात् क्व प्रस्थानम्।

सप्तभूमिके भवने चाढ्याः सुवासिनीभिः सहिताः
गवाक्षमध्याद् वर्षादृश्यं संवीक्षन्ते मुदिताः।
प्रावृट्कालाः सुप्रतीक्षिताः.........।।5।।

झञ्झावातैर्गेहखर्परा इतस्ततो निक्षिप्ताः
उपस्करे पयसा संक्लिन्ने गेहिजना विक्षिप्ताः।

परस्परं सम्मिलिताः कूपा सरित्तडागा वाप्यः
वीथी - मार्ग-क्षेत्रविभागो नैव चक्षुषा मेयः।

केचिद् भवनच्छदे निषण्णाः केचिद् विटपारूढाः
सरीसृपाः कृकलासास्तत्र प्राणेप्सवोऽधिरूढाः।

राजपथे सञ्छन्ने सलिलैरनुमानेन निवेशः
अर्धनिमज्जितयानासीनैर्मनुजैः शनैः प्रवेशः।

छत्रधारिणः प्रयान्ति केचित् केचित् कम्बलवन्तः
केचिद् बहिरायातुं शक्ता वर्षात्राणकवन्तः।

पवनयानगा गगनमार्गतो नैके मन्त्रिप्रभृतयः
वर्षाकृतविनाशमनुमातुं तत्रायान्ति सुमतयः।

कृच्छ्रं क्वचिद्दृष्टपरिपाकैरहो सहन्ते जनताः
वर्षाकालाः क्वचिदायाताः प्रचुरसमृद्ध्या सहिताः।
प्रावृट्कालाः सुप्रतीक्षिताः.........।।6।।



# शरत्सौन्दर्यम्

निर्मलं गगनं सर्वं निर्मलं चन्द्रमण्डलम्।
शारदी रजनी रम्या ज्योत्स्नांशुकविमण्डिता।।1।।

वासवः सलिलैः सम्यक् सन्तर्पितवसुन्धरः।
भूषयामास सुश्वेतवासोभिरिव वारिदान् ।।2।।

नाद्य भेकध्वनिस्तीव्रः श्रुतः केकाकलो न च।
नान्धकारः कृतो मेघैर्न तथा निर्झरस्वनः।।3।।

दीर्घगम्भीरनिर्घोषा दीर्घपर्वतविग्रहाः।
प्रत्तजीवनसर्वस्वा विलीनाः क्वापि वारिदाः।।4।।

अम्बरं वारिदैर्हीनं हताशा वीक्ष्य बर्हिणः।
स्वाभूषणानि बर्हाणि त्यक्त्वा मौनमिवाश्रिताः।।5।।

नाद्य वाता महावेगा शीतलोदकशीकराः।
प्राणिनां पृथिवीपृष्ठे प्राणेन्द्रियविकम्पनाः।।6।।

भानवैर्भानुसम्भूतप्रकाशैः सुप्रकाशितम्।
रमणीयं जगत् सर्वं विभाति सुखिभिर्जनैः।।7।।

ये जाग्रति स्म वर्षासु कठोरैर्मेघगर्जनैः।
ते जाग्रति सुखं प्रातः खगानां रम्यगायनैः।।8।।

क्षुद्रा नद्यो महावेगा गर्वोन्मत्ताः सुचञ्चलाः।
उत्पाटित-महामार्गाः शुष्का गर्वादिव द्रुतम्।।9।।

महानद्यस्तु गम्भीराः स्वच्छाम्भस्तनुकान्तयः।
पुलिनाम्बरशोभिन्यो मन्दं यान्ति सरित्पतिम्।।10।।

हंसाश्च चक्रवाकाश्च नदीपुलिनचारिणः।
मोदन्ते कमलामोदात् कूजन्तः प्रमदान्विताः।।11।।

कृष्णपक्षेऽपि नो कृष्णा यामिनी वरवर्णिनी।
रम्यं समौक्तिकं क्षौमं दधानेवाऽतिशोभते ।।12।।

विशुभ्रतूलसंकाश - नवकाससुमानि च।
ध्रुवं वर्षर्तुवार्धक्यं कथयन्ति जने जने।।13।।

सुधया लिप्तसौधेषु विटपेषूटजेषु च।
सरसीषु सरोजेषु शरज्ज्योत्स्ना प्रकाशते ।।14।।

कालेऽस्मिन् युववक्त्रेषु वर्धतेऽलौकिकी छटा।
मनोविहङ्गमास्तेषां सोत्सवा उत्पतिष्णवः ।।15।।

पद्मकिञ्जल्कसंस्पर्शात् पीतश्मश्रुविभूषिताः।
गुञ्जन्तो मधुपा भान्ति धूयमानाः समीरणैः।।16।।

कुसुमानां स्मितं वीक्ष्य प्रसीदन्निव मानवः।
त्रोटयित्वा क्षणं धृत्वा घ्रात्वा क्षिपति भूतले।।17।।

गृहीतकलमाः कीरा उद्यन्तः शोणचञ्चवः।
विचित्राः सुमनोमाला इव भान्ति विहायसि।।18।।



डयमानाः सरस्तीरं निकषा वकपङ्क्तयः।
उच्छ्रयन्त्यो दिवा भान्ति पताका धवला इव।।19।।

चातकानां पिपासूनां दीर्घाह्वानं विहायसा।
बलाद् वियोगिनां प्राणान् हरतीव समाकुलान्।।20।।

सरस्वतीसपर्यायां कुमुदाः समुपस्थिताः।
हसन्ति स्फाटिकीं मालां चन्द्रज्योत्स्नानुभाविताः।।21।।

शरच्छ्रीस्निग्धसर्वाङ्गा वृषा जग्धहरित्तृणाः।
शृङ्गोत्खातनदीकूला नर्दन्त्येव मदोत्कटाः।।22।।

स्वेदमृत्कणसुस्नाता निजकर्मधुरन्धराः।
हलिनः कृषिसंलग्ना न धर्मं वीक्ष्य बिभ्यति।।23।।

सीमन्तलग्न-शीतोदकुम्भभोज्यान्नभाजनाः।
तेषां पत्न्यस्तपत्यर्के तत्रायान्ति शुचिस्मिताः।।24।।

# शिशिर्तुः प्रक्रमते

विहाय तरणिर्याम्यामाशां विशत्युत्तरामाशाम्।
किन्तु विषण्णो विन्दति सोऽयं प्रायः प्रभानिराशाम्।।1।।

जातः शीततमः शीतांशुर्निशा शीतलाऽत्यन्तम्।
शीतलनभोजलाब्धिस्नातमुडुवृन्दञ्च सकम्पम्।।2।।

प्रातः संसारः स्वपितीव शीतभयादतिवेलम्।
कुज्झटिकाधूसरितकम्बले तनुमाच्छाद्य विहेलम्।।3।।

रात्रि-रमण्या बाष्पस्नाता द्रुमा अश्रु मुञ्चन्ति।
प्रोञ्छनया तेषां वसुधाया अपि दूर्वाः क्लिद्यन्ति।।4।।

शीतलतुहिनबिन्दुपरिषिक्तं पाटलकुसुमं चैतत्।
कण्टक-निचये लब्ध्वा स्थानं विहसति मन्दं मन्दम्।।5।।

जले शीतले स्थिता नलिन्यो नष्टाः कोमलगात्र्यः।
जीवेत् कथं नलिनसमवायस्तद्विरहादसहायः।।6।।

हरितां क्वचिन्नवल-गोधूमैर्नीलामतसीकुसुमैः।
सर्षपपुष्पैः पीतां शाटीं वसुधा धत्तेऽनुपमैः।।7।।

अमी कर्षका धरणीमम्बां दृष्ट्वा बहु मोदन्ते।
तेभ्यो बहु दधती भोजयितुं हृष्यति सोऽपि वनान्ते।।8।।

कलितकपित्थबदरफलसाकफलितनूतनचणकादीन्।
भुक्त्वा युवका ग्रामे जहसुर्यतिनो बद्धसमाधीन्।।9।।



जलदावली कदाचिन्नभसो हिमगुलिकाः पातयते।
बहिरायातुं सहस्रांशुरपि नैव साहसं कुरुते।।10।।

स्वच्छं तोयं दर्पण - तुल्यं यद्यपि सरित्सरःसु।
शीते स्नातुं किन्तु साहसं के कुर्वन्ति मनस्सु।।11।।

समुपासीनाः सरितां तीरे विहगा वारिधुरीणाः।
जले नावगाहन्ते तरुणाः संयति यथाऽप्रवीणाः।।12।।

सोत्साहाश्छात्रा अध्ययने लग्नाः शयिताश्चान्ये।
वेदाध्ययने केचिल्लग्नाः केचिन्निजगृहकार्ये।।13।।

मल्लस्तम्भालम्बा बलिनो व्यायामे संलग्नाः।
स्वेदस्विन्ना मल्लाः केचिद् द्वन्द्व-खुरलिकामग्नाः।।14।।

मातुर्दुग्धं पीत्वा वत्सा उत्पुच्छा धावन्ति।
दर्शं दर्शं क्रीडास्तेषां गावो हुङ्कुर्वन्ति।।15।।

शान्ते वायौ प्रातर्घर्मे बहिरागत्य मनुष्याः।
बाला वृद्धा ललना हृष्टा इतस्ततो ह्युपविष्टाः।।16।।

पङ्क्तिं बद्ध्वा विहगा वलभौ माला इव राजन्ते।
रम्यं रावैस्ते कूजन्तो नृणां मनो हरन्ते।।17।।

उपकुण्डं निशि वह्निं परितो ग्रामीणास्तिष्ठन्ति।
दशवादनवेलापर्यन्तं हास्यकथाः कथयन्ति।।18।।

## वसन्तसुषमा

एष वसन्तः पुनराव्रजितः कुसुमेषुच्छलनासहितः
घूर्णन् जनो विना मधुपानं दिशो वीक्षते परिमुदितः ।।1।।

तरणेर्मङ्गलमय आगमने कोमलकरतलसंकलितम्
उषाकामिनी किरति कुङ्कुमं तद्वर्त्मन्यत्यरुणतमम् ।।2।।

प्रादुर्भूतं जगदिदमखिलं यदभूत्तमसि पुरा लीनम्
रवेः प्रकाशे विहगारावः कुरुते संस्तुतिकलगानम् ।।3।।

उदिते वियति पद्मिनीनाथे पद्मिन्यो विभ्रमरतयः
अर्घपाणयः प्रणता मुनयः कुसुमपाणयस्तरुततयः ।।4।।

रम्या वसुधा रम्यं गगनं ह्रदश्च निर्मलतरनीरः
अयं सुगन्धिः क्रीडन् कुसुमैः प्रवहति वरपवनोऽधीरः ।।5।।

लोहितानि किंशुककुसुमानि प्रतिवनविटपं खलु पुरतः
पर्णानीव यत्र राजन्ते शुकपक्षिणो हरिद्गरुतः ।।6।।

पीतकुसुम-मुकुटो नटवेषः किसलय- हरितदुकूलकलः
कर्णिकार इह कुरुते लास्यं पवनदत्तलयकेलिचलः ।।7।।

प्रत्यङ्गं कुसुमालङ्कारैः कृतशृङ्गारा रतिवलिताः
इव सुन्दर्यो नववल्लर्यो विभान्ति नूनं तनुललिताः ।।8।।

जातिमधूकवकुलसितमल्ली - चम्ककपुँन्नागास्तिलकाः
मञ्जुलोध्र- मुचुकुन्दकरण्डाः संस्पर्धया जातपुलकाः ।।9।।



विहगारावैः स्तुवन्त एते कुसुमस्तवकं विकिरन्तः
विभान्ति भक्त्या तनयैस्तुल्या निजमातरं समर्चन्तः ।।10।।

सरसिजानि विकसन्ति तडागे पाटलसुमानि वसुधायाम्
प्रतिदिशमुत्सव इवातिललितो संलक्ष्यते न दिशि कस्याम् ।।11।।

पवनवारिता मधुपा लुब्धा निजकान्ताभिरिमे सहिताः
गुञ्जन्तः सुमनःसु विशन्ति प्रायो मानलेशरहिताः ।।12।।

नानाक्रीडासक्ता विहगा अतिमधुरं परिगायन्तः
उच्चैर्विटपानां शाखालीर्मुखरयन्ति बहु खेलन्तः ।।13।।

मन्दं नलिनीनां मधु पीत्वा क्षणं तत्र गुञ्जनधन्याः
कितवबन्धवो मधुपा एते व्रजन्ति नवनलिनीरन्याः ।।14।।

सरसि च निजलावण्यरोचिषा क्रीडारक्ताः स्नान्तितराम्
सुस्मितवदना इव पद्मिन्यः समीरेरिता भान्तितराम् ।।15।।

करकिसलयधृतपावनकलशाः शुचयो मञ्जुलास्यगतयः
इष्टदेवतामर्चितुमेता गच्छन्ति प्रमदाततयः ।।16।।

नीलनिबिडसहकारसुशाखाच्छन्नः पिको युवा कोऽयम्
कूजति ''कुहूःकुहू'' र्बहुवारं हृदि किञ्चिन्निध्याय कलम् ।।17।।

अनुकरोति माणवकसमूहो मधुरस्वनं प्रसन्नतया
तेभ्योऽसावपि ददात्युत्तरं त्वरितं विटपाच्छन्नतया ।।18।।

निष्पर्णं कुरुते प्रतिवर्षं शिशिरो यदनभिजात इतः
तत् प्रसज्जयति सुधीर्वसन्तः कुसुमदुकूलकलामहितः ।।19।।

# शरत्सुषमा

अष्टौ मासान् दिनकरकरैः सञ्चितं यत् पृथिव्या-
स्तद् वर्षर्तौ सलिलमखिलं वारिदा अर्पयित्वा।
रागाभावाद् विमलतनवो नाल्पपुण्यप्रभावाद्
राजन्ते वै शरदि गगने निर्मले संचरन्तः।।1।।

गर्वान्नेन्द्रः स्वविजयधनुः सप्तवर्णं धुनीते
विद्युच्चाद्य प्रकृतिचपला क्वापि दिक्षु प्रयाता।
आकाशोऽयं प्रकृतिमगमत् पूर्ववन्निर्मलाभो
नक्षत्रेशोऽप्युडुसमुदयैर्दर्शनीयो विभाति।।2।।

कुन्दे कासे कुमुदनिकरे सुप्रसारे तुषारे
ज्योतिश्चक्रे वियति विमले चन्द्रबिम्बेऽम्बुराशौ।
गङ्गाकूले सरसि रुचिरोद्यानकुञ्जप्रसूने
वाप्यां कञ्जे विलसति शरत्सिन्धुजा-चारुहास्यम् ।।3।।

मेघैः सिक्ताः शिखरिशिखराः स्निग्धवृक्षाग्रशाखा
विद्योतन्ते विधु-मृदुकरै रञ्जिताः सज्जिताश्च।
शान्ता वाता उपवनलतापादपानां सुमाली-
गन्धान्नीत्वा दिशि दिशि जनान् नन्दयन्तो वहन्ति ।।4।।

पङ्कः शोषं व्रजति वसुधा चार्कतापात् प्रतप्ता
मीनाः प्राणाञ्जहति विकलाः पल्वलानां जलेऽल्पे।
दंशैः कष्टं भवति सतृणे वर्धते सर्पभीति-
श्चन्द्रः क्लेशं हरति सकलं तापजं शर्वरीषु ।।5।।



पक्वैर्धान्यैः कुवलयदलैः कैरवैर्मालतीभिः
स्निग्धैर्वृक्षैः कुसुमनिकरैः पुष्पिताभिर्लताभिः।
फुल्लैः कासैर्मृदुलकमलैः सारसानां विरावै-
र्नित्योत्साहा लसति वसुधा भूषणैर्भूषितेव।।6।।

दूरोदञ्चत्पुलिनवसना नीरजस्का गभीरा
गायन्त्योऽमूर्मनसि मुदिता गीतकानीव मन्दम्।
नद्यो वध्वस्तटतरुसुमैर्भूषिता पत्युरब्धे-
र्यान्त्यभ्यर्णं सपदि मिलितुं वीचिभिर्नीयमानाः।।7।।

घोरारण्यात् प्रमदगतयो वारणेन्द्रा नगाभा
उग्रारावैः खगमृगपशून् दूरयित्वा स्वतन्त्राः।
तोयोत्सेकैः पिहितनयना हस्तिनीभिः समेताः
क्रीडासक्ताः सलिलममलं मोदमानाः पिबन्ति।।8।।

दृष्ट्वा रिक्तानुपरिचरतो वारिवाहान् विशुभ्रान्
भग्नोत्साहा व्यथितमनसः पोतकाश्चातकानाम्।
मोघारावाः खलु कतिपयान् दुर्लभ-स्वातिबिन्दून्
याचन्तेऽमी कृतपरिचयाः सूचयन्तस्तृषां स्वाम्।।9।।

## ग्रीष्मः

ग्रीष्मे भीष्मतमे विन्ध्येषु प्राणभृतो म्लायन्ति
कुटिलशासने के वा लोकाः संतोषाद् विहरन्ति।।1।।

धूलीभिर्धूसरिता धरणी सस्यैस्तृणैर्विहीना
कूपा वाप्यो नदी तडागा जाताः सलिलैर्हीनाः।।2।।

अटवी पर्णकुसुमचयरहिता कुञ्जसमूहो दीनः
नृत्यन् हसति तत्र दावाग्निः पवनबलादतिपीनः।।3।।

ललनाः कूपं जलमानेतुं क्रोशद्वयं प्रयान्ति
मध्येदिनं शिरसि धृतकुम्भा स्विन्नाः पुनरायान्ति।।4।।
ग्रीष्मे भीष्मतमे...... ..... ......

शुष्कसरित्स्थलमध्ये केचित् कृतवितस्तिमितगर्ताः
तोयैः पूरयन्ति निजभाण्डं चुलुकैश्चुलुकैः प्रीताः।।5।।

शीतलपयः प्रपापरिपाटी लयं गता कलिदोषात्
जलं कवोष्णं काचशरावे जनः पिबति सन्तोषात्।।6।।

सिंहा गजा गवयमृगकीशाः सरीसृपाः कृकलासाः
परिवीक्षन्ते शून्यारण्यं क्षुत्क्षामा विगताशाः।।7।।

तापाद् भीता वसन्ति नीडे खगा न बहिरायान्ति
नालिकपङ्के द्रुतं श्वसन्तः श्वानश्चिरं स्वपन्ति ।।8।।
ग्रीष्मे भीष्मतमे...... ..... ......



अल्पे तडागसलिले मीना दीना अलं स्फुरन्ति
नक्रा नद्यां गभीरनीरे कृतयत्ना विहरन्ति।।9।।

झंझावाता इव मदमत्ता उष्णास्तनूर्दहन्तः
तृणानि पांसून् जनाक्षिमध्ये पूरयन्ति घूर्णन्तः।।10।।

महार्हभवनान्यपि धूलीभिर्धूसराणि लक्ष्यन्ते
राष्ट्रे विप्लवयुते कुतः के शान्तिं चिरं लभन्ते।।11।।

समीरवेगात् सलतास्तरवो मूलैः सह निपतन्ति
तृणकुशविरचितानि दीनानामुटजान्यपि च पतन्ति।।12।।
ग्रीष्मे भीष्मतमे...... ..... ......

प्रत्युपवनं वल्लरीव्रातो नीरसतामापन्नः
भीष्मो ग्रीष्मो भ्रमति कोपनो ह्रदसमुदयो विपन्नः।।13।।

पान्थाः स्मरन्ति शरणं तापात् क्वच्छाया क्व च सलिलम्
ग्रामा दूरतरं यान्त्यग्रे पन्थाः सर्पति दूरम्।।14।।

ऊर्ध्वं चण्डकिरणसन्तापैस्तप्ता धरा ह्यधस्तात्
विपुलं श्रमिका वहन्ति भारं पराजिता इव भाग्यात् ।।15।।

उपवनकुसुमसन्निभा धनिनः सद्मसु विश्राम्यन्ति
विद्युद्व्यजनवीजिताः प्रायः सुकुमारा म्लायन्ति।।16।।
ग्रीष्मे भीष्मतमे...... ..... ......

केचिद् दंशमशकपरिकीर्णे जीर्णे पवनविहीने
गेहे वसन्ति निर्वाहार्थं परकीये स्तरहीने।।17।।

नान्ने रुचिर्न बहिरायातुं दिने जनानां हर्षः
अधिका रुचिःशीतले सलिले नश्यति नैव च तर्षः।।18।।

श्रमिकाः श्रान्ता दिने श्रमेण स्वेदसीकरैः क्लिन्नाः
रात्रावपि निद्रां न लभन्ते व्यजनचालनैः खिन्नाः।।19।।

सुप्ते जने निशायां जलदाः सेर्ष्या इव वर्षन्ति
सविष्टरेऽभ्यन्तरं प्रयाते पुनश्च ते विरमन्ति।।20।।
ग्रीष्मे भीष्मतमे...... ..... ......



# परीक्षा

छात्रा हि सर्वे पठने निमग्नाः
स्वापं न रात्रौ न दिवा लभन्ते।
तीर्णाः कथं स्याम नदीमिवैनां
समागतां वात्सरिकीं परीक्षाम्।।1।।
कदाचिदेतच्च कदाचिदन्यत्
ते पुस्तकानां च शतं पठन्ति।
प्रोक्तं च किं वा लिखितं च किं वा
भावश्च को वेति विचारयन्ति।।2।।
अभाववन्तो द्रविणैर्विहीनाः
स्थानं न कालं न च पुस्तकानि।
ते प्राप्नुवन्तीत्यत एव चिन्तां
तीर्णाः कथं स्याम नदीं परीक्षाम्।।3।।
विद्युत्प्रकाशैर्बहुसाधनैश्च
युक्ताश्च केचिन्न पठन्ति बालाः।
आलस्यभावादथवा प्रमादात्
परं परीक्षेति विचिन्तयन्ति।।4।।
काले परीक्षाभवनं प्रविष्टाः
किञ्चित् सकम्पाश्च ससंशयाश्च।
छात्राः प्रपश्यन्ति निरीक्षकास्यं
निरीक्षकाश्छात्रविचेष्टितं च।।5।।
प्रश्नं ततः पृच्छति तत्र कोऽपि
निरीक्षकं सोऽपि तदा ब्रुवाणः।
निष्कास्य तावल्लघुपत्रकं तेऽ-
नुकुर्वते चावसरेषु केचित्।।6।।

अध्यापकाध्येतृनिरीक्षकाणां
सत्यस्य धैर्यस्य निजोद्यमस्य।
ज्ञानस्य शीलस्य तथात्मशक्तेः
सेयं परीक्षाऽथ परीक्षकाणाम्।।7।।

धर्मे परीक्षा किल पाण्डवानां
श्रीरन्तिदेवस्य तथाऽतिथेये।
सत्ये हरिश्चन्द्रनृपोत्तमस्य
दाने च कर्णस्य परा परीक्षा।।8।।

कृता सतीनामनले परीक्षा
कुमारिलस्याप्यनले परीक्षा।
वह्नौ पयोधौ हनुमत्परीक्षा
विपत्सु धैर्ये महतां परीक्षा।।9।।

नाना परीक्षाविषया हि लोके
नाना परीक्षावसरा जनानाम्।
बालाश्च वृद्धाः प्रमदा युवानः
परीक्षकाः प्राणभृतश्च सर्वे।।10।।

परीक्षते श्रीभगवान् स्वभक्तान्
कुर्वन्ति भक्ता भगवत्परीक्षाम्।
एवं परीक्षासमनुक्रमेण
लोकस्थितिः सुस्थिरतां प्रयाति।।11।।

अभीक्ष्णमुत्साहकरीपरीक्षा
परां मुदं प्रापयितुं परीक्षा।
भयं द्रुतं दूरयितुं परीक्षा
नृणां सदा लाभकरी परीक्षा।।12।।



# निर्वाचनम्

निर्वाचनकालोयं सम्प्राप्तो विनियोजितः।
जनानामेव भाग्येन जननेतृप्रयासतः।।1।।

अतिनिर्धनदेशस्य मुद्राणां शतकोटयः।
तत्प्रबन्धे प्रलीयन्ते श्रमिकैरर्जिताः श्रमात्।।2।।

प्रतिवर्षमियं क्रीडा कस्मै लाभाय जायते।
त एव खलु जानन्तु राजनीतिविचक्षणाः।।3।।

प्रजाजनैः प्रजातन्त्रे प्रजानां हितकारकः।
निर्वाचितः सुधी नेता शासनं कर्तुमर्हति।।4।।

राजतन्त्रेपि राजानः प्रजासेवापरायणाः।
पितृवत् पालयन्ति स्म सर्वाश्च प्राणवत् प्रजाः।।5।।

तेषु केचित् प्रजाभक्षा आसन् ये भोगवादिनः।
स्वच्छन्दास्तामसाः क्रूराः क्रूरैरेव प्रपोषिताः।।6।।

अधुना तु प्रजातन्त्रं जगत्यां सर्वसम्मतम्।
सदोषेऽपि रुचिर्नॄणामस्मिन् नान्या गतिः परा।।7।।

श्रमिकाः कृषका विज्ञाः शिल्पिवैज्ञानिका जनाः।
महिला बालका वृद्धा युवका धनिनोऽधनाः।।8।।

सर्व एवं प्रजा नूनं दलिताश्चाभिजातकाः।
सर्व आवश्यका देशे बहुसङ्ख्याल्पसङ्ख्यकाः।।9।।

समाहितं तु सर्वेषां प्रजातन्त्रे हितं परम्।
नेतारो बहवः सन्ति तथा तेषां दलानि च।।10।।

विभिन्ना मतयस्तेषां भ्रान्तिं यान्ति प्रजाजनाः।
निर्वाचनकाले च विचित्रा नेतृनीतयः।।11।।

पङ्क्तबद्धा जनश्रेणी योजिता योजनानि च।
प्रयाति राजमार्गेषु जयघोषसमन्विता।।12।।

द्वित्रिचक्रचतुश्चक्रयानानि विविधानि च।
सज्जितानि पताकाभिर्निःसरन्ति दिने दिने।।13।।

चित्राणि पूर्वनेतॄणां लम्बन्ते त्यागिनां पथि।
ध्वनिविस्तारके तेषां गुणगानं विधीयते।।14।।

क्वचिज्जनसभा हट्टे क्वचिच्चैव चतुष्पथे।
महाजनसभा क्वापि विशाले भूमिविस्तरे।।15।।

व्याख्यानानि च नेतॄणामुद्दामानि भवन्ति च।
प्रतिजानन्ति ते प्रायः सुखे मज्जयितुं प्रजाः।।16।।

निगूह्य निजदोषांस्ते परदोषान् वदन्ति वै।
हंसशुभ्राम्बरा केचिद् विषहेमघटा इव।।17।।

येषां च शासने पूर्वं राजकोषा लयं गताः।
विश्वसनीया त एवाद्य तद्विधैश्च विशेषतः।।18।।

निर्वाचनमहायज्ञे पवित्रे हितकारके।
नाना छिद्राणि जायन्ते यानि लज्जाकराणि च।।19।।



धर्मनिरपेक्षसापेक्षकलहोऽपि प्रवर्तते।
तदर्थं ते न जानन्ति जनभ्रान्तिर्विधीयते।।20।।

क्वचिच्चपेटिका पाता मुष्टामुष्टि क्वचित् क्वचित्।
केशाकेशि क्वचिद् दृष्टा क्वचिल्लगुडचालनम्।।21।।

क्वचित् कुन्ताः क्वचित् प्राशाश्चाल्यन्ते च जनैः पथि।
क्वचित् परशवस्तीक्ष्णाः खङ्गचालनमेव च।।22।।

मार्गेषु च विस्फोटा निगूह्यन्ते भुवस्तले।
आरक्षिणश्च हन्यन्ते गुलिकाभिः शतानि च।।23।।

क्वचिन्निर्वाचनात् पूर्वं क्रूरो नेतृवधः कृतः।
कारावासे विपात्यन्ते निर्दोषा अपि केचन।।24।।

पेटिकासु मषीपातो मतपत्रविपाटनम्।
अन्यच्चापि तथा तत्र पेटिकाहरणाऽदिकम्।।25।।

क्वचिच्च मतसंख्यातो मतदानमतिरिच्यते।
विधीयते पक्षपातो गणनासु क्वचित् क्वचित्।।26।।

कृत्रिमा मतसंपूर्णा शतशोऽथ सहस्रशः।
उपलब्धाः क्वचिन्नूनं कृत्रिमा मतपेटिकाः।।27।।

एवं विधानि कृत्यानि निर्वाचनदिनेषु वै।
प्रजातन्त्रे न शोभन्ते देशलज्जाकराणि च ।।28।।

नीरक्षीरविवेकेन हंसैरिव प्रजाजनैः।
चेतव्यो निर्भयो नेता नीतिमान् कर्मठः शुचिः।।29।।

नेतृभिर्जनसेवाया लभ्यतेऽवसरः शुभः।
स याति प्रतिकूलश्चेत् बहिष्कारेण दण्ड्यते।।30।।

निर्वाचनमहायज्ञः समाप्तोऽयं हिं पावनः।
निर्वाचिता हि नेतारो बहवो नयतत्पराः।।31।।

सत्यनिष्ठास्तपोनिष्ठाः कर्मठाः सुयशस्विनः
शुचयो बुद्धिमन्तश्च देशसेवाव्रतास्तथा।

अनेके च समुद्दान्ताः कुख्याता लोभवृत्तयः
वृथाभिमानिनो देशे प्रजाभिश्च बहिष्कृताः।।32-33।।

मतभेदेऽपि नेतॄणां देशः सर्वोपरिस्थितः।
अतस्त्यक्तवृथावादैश्चिन्तनीयं तथा जनैः।।34।।

पूर्वं स्वतन्त्रतायज्ञे दत्ता प्राणाहुतिर्जनैः।
भावना सा समुत्पाद्या देशार्थं कर्मतत्परैः।।35।।

यस्मिन् शासति देशोयं पूर्णां याति समुन्नतिम्।
श्रेष्ठः प्रधानमन्त्री सः वन्दनीयो जनैः सदा।।36।।

एवंविधा हि नेतारो देशभक्तिपरायणाः।
सदैव मानमर्हन्ति नालसाः स्वार्थतत्पराः।।37।।



# जनः प्रमाद्यति

काचकलितकुतुपात् किल मदिरां
पीत्वा जनः प्रमाद्यति रे।
को वा शृणुयाद्देशविपत्तिं
जनप्रतिनिधिः पश्यति रे।।1।।

गेहे गेहे प्रचुरा पीडा
नो सङ्कोचो नैव ब्रीडा
राजशंसिता द्यूतक्रीडा
मार्गे स्थिताः कुवलयापीडाः।।2।।

ध्यायति हितमिव नृपासनस्थो
नेता मुनिवत् कुशासनस्थः।
कर्त्तुं किमपि न यतते धीरः
सभाप्रवचने ह्यतिगम्भीरः।।3।।

देशाद् देशाद् ऋणमायाति
क्वापि तदर्धं लयं प्रयाति।
राजकोषतो धनमपयाति
कान्दिशीकं न प्रतिभाति।।4।।

क्षुद्रे कक्षे दश निवसन्ति
ह्युत्पद्यन्ते तत्र मरन्ति।
मत्कुणदंशास्तत्र दशन्ति
केचिन्मद्यं तत्र पिबन्ति।।5।।

जीर्णे कूपे सरसि न सलिलं
लग्ने हस्तनले क्व च सलिलम्।
गलितान्नलादसमये सलिलं
मद्यं सुलभं विरलं सलिलम्।।6।।

## नवोदितप्रतिभासमागमः (1986ई.)

मध्यप्रदेशस्य मनो हि सागरं
तद्- विश्वविद्यालय-पावन-स्थले।
नवोदितानां प्रतिभावतां महा-
नायोजितो भव्यतमः समागमः।।1।।

अगस्तमासे षडशीतिवत्सरे
श्रीभास्कराचार्य-दृढप्रयत्नतः।
त्रिंशाद् दिनाङ्काच्च दिनद्वयं त्वयं
प्रवर्तितो बुद्धिमतां महोत्सवः।।2।।

दवे कुलपतिः कृष्णकुमार उद्घाटयत्।
नवीन - विद्यासंवादं नव- सम्भावनाकृते।।3।।

श्रीगयाचरणो विद्वाँस्त्रिपाठी समभूषयत्।
सादस्पत्यञ्च संगोष्ठ्याः प्रयागतिलकायितः।।4।।

वयोऽधिकानां विदुषां समक्षं
यूनाञ्च सद्यः स सुधीर्बभाषे।
आमन्त्रणोपक्रम एष यद् वै
जानामि मूल्याकलनाय जातः।।5।।

सुभाषितं यच्च सदर्भकाणां
तत्स्वीकरिष्यन्ति मुदा महान्तः।
प्रोत्साहयन्तश्च सदान्यमार्गं
तेभ्यः करिष्यन्ति गतिप्रदं ते ।।6।।



स्फोटप्रवादे विशदं विमर्शं
विधातुमाख्यातमथो समीक्षितुम्।
आमन्त्रिता वै तरुणा विचक्षणा
गोष्ठ्यां तदा व्याकरणाश्रितायाम् ।।7।।

आप्रातिशाख्याद् मतिमान् प्रवक्ता
नागोजिभट्टान्तपरम्परां पराम्।
आख्यातवादे गहनेक्षणं तथा
किशोरचन्द्रः समपादयत्तराम् ।।8।।

स्फोटस्य सिद्धिं परिपुष्टतर्कैः
शास्त्रीयशैल्या कमलेशझाऽसौ।
वाक्यार्थबोधे च नवां गवेषणा-
मस्थापयत् सूरिमताऽनुसारम्।।9।।

भगवच्छरणः शुक्लो व्याख्यानार्थमुपस्थितः।
संख्या कालः कर्म कर्ता तिङर्था इति सोऽवदत्।।10।।

एकस्मिन् दृश्यते लोके यथा वृन्ते फलद्वयम्।
आख्यातेऽपि तथा नूनं व्यापार-फलयोः स्थितिः।।11।।

बच्चूलालः सभाऽध्यक्षो वैयाकरण उत्तमः।
उदाहरन् नवीनानां प्राचीनानां मतान्यपि।।12।।

शब्दैरेव तु शब्दानां सम्बन्धः स्यादितः कथम्।
इति व्याडिमतं गूढमानयामास सम्मुखम् ।।13।।

वक्तृत्वशक्त्या प्रतिभाविशेषात्
प्रश्नोत्तरैः सूक्ष्मतमैः समन्तात्।
किशोरचन्द्रोऽथ पुरीनिवासी
स्थानं प्रपेदे प्रथमं हि गोष्ठ्याम्।।14।।

भगवच्छरणः शुक्लो कमलेशोऽपि तार्किकौ।
प्राप्तवन्तौ पुरस्कारं द्वितीयं प्रतिभार्जितम्।।15।।

अथ साहित्य- संगोष्ठी प्रारब्धा दिवसेऽपरे।
अभवन् सप्त वक्तारो रसव्यङ्ग्यप्रबोधने।।16।।

देवनारायणो वक्ता शब्दवृत्तिविवेचने।
दृष्टान्तैर्व्यञ्जनावृत्तेः संभाव्यार्थानदर्शयत्।।17।।

नागोजिदृष्ट्या संस्कारविशेषो व्यञ्जनेह यत्।
संस्कारस्मृति- बोधेषु सम्बन्धश्चापि वर्तते।।18।।

बच्चूलालस्तदाऽवोचन्मनीषी व्यञ्जनां विना।
व्यङ्ग्यार्थप्रत्ययः शक्योऽभिधाभिरपि केवलम् ।।19।।

शास्त्रमाश्रित्य संवादो वक्तृ- प्राश्निकयोस्तदा।
उपस्थितेषु विद्वत्सु प्रवृत्तो रसवर्धकः ।।20।।

हस्तामलकवच्छास्त्रोपस्थित्या व्याख्यया तथा।
जिगायाद्यं पुरस्कारं देवनारायणो हि झा ।।21।।

भाषाऽधिकाराद् दृष्टान्तैः प्राप प्रश्नोत्तरैस्तथा।
द्वितीयं च पुरस्कारं पुर्याः सूर्यमणी रथः।।22।।



श्रीकालिदाससंस्थान- निदेष्टुः प्रतिभावतः।
आध्यक्ष्ये काव्यकाराणां परिषद् विनियोजिता।।23।।

स्वकृतिष्वनुवादेषु शक्त्या गीतौ च सौष्ठवात्।
विन्ध्येश्वरीप्रसादोऽभून्मिश्रः प्रथमकीर्तिभाक् ।।24।।

अन्येऽथ कवयो मञ्चादाहूताः सादरं ततः।
बच्चूलालस्तथा मान्यः श्रीनिवासरथः सुधीः।।25।।

पुष्पाऽसौ दीक्षितोपाह्वा गीतिकर्त्री मनीषिणी।
मिश्रोऽपि जगदीशः श्रीराधावल्लभ एव च ।।26।।

एतेषां काव्यमाकर्ण्य विशिष्टं रसनिर्भरम्।
नव- संवेदनाऽऽवर्ते मनो मग्नं विपश्चिताम्।।27।।

आद्या सन्ध्या प्रयागस्य रङ्गलोकेन रञ्जिता।
आजादमिश्र-निर्दिष्ट-पद्मप्राभृतक - त्विषा।।28।।

स्थानीया नाट्यपरिषत् परस्मिन् सान्ध्यमङ्गले।
वेदसूक्तत्रयाधारां वितेने नृत्यनाटिकाम्।।29।।

प्रियंवदा तथा दीप्तिश्चक्राते रम्य - नर्तनम्।
समं मञ्जीरकैरत्र वेल्लितं हृदयालुभिः।।30।।

# आचार्यो बच्चूलालः

जातो योऽवस्थिवंशे सततशुचितमे घाघरातीरवर्ति-
ग्रामे कुट्यां मनोज्ञः सजनकजननीनन्दनः कोमलाङ्गः।
धूलौ चिक्रीड बालैरतिसरलतमो वृक्षमूलेषु यश्च
बच्चूलालः कृतोऽसौ तदनुगुरुजनैः पण्डितस्यैकनाम्ना।।1।।

श्रीबदरीप्रसादोऽस्य पिताऽऽसीत् सात्विकः शुचिः।
अवस्थी वैद्यनाथश्च बभूवास्य पितामहः।।2।।

ज्ञानं प्रापाक्षराणां स्वजनकसविधे तत्र रामायणेन
सार्धं तेनैव शालां कतिचन दिवसान् स्कन्धसंस्थो जगाम।
ज्ञातुं गीर्वाणवाणीं गुरुचरणगतो ऽधीतवान् पाणिनीयं
आचार्यान्तं पठित्वा खलु गहनतमे काव्यशास्त्रे विवेश।।3।।

शास्त्रे व्याकरणे तस्य गुरवः ख्यातकीर्तयः।
विद्वत्परम्पराप्राप्ताः शिष्येषु स्नेहतत्पराः।।4।।

वेदनाथस्तथा श्रीमान् श्रीमहावीरझा महान्
वैयाकरणमुख्यश्च शास्त्री श्रीचन्द्रशेखरः।।5।।

जग्राह न्यायशास्त्रं विमलतममतिर्दर्शनै सार्धमन्यैः
हिन्दीकाव्यानि सर्वाण्यपि मधुरतमान्यध्यगात् स्वात्मतृप्त्यै।
अन्या भाषा गभीरा अपि स पठितवान् यत्नतो बोधवृद्ध्यै
पद्यं बद्धुं प्रवृत्तो यदि स विहितवान् मार्मिकं हृद्यमेव।।6।।

नानासंस्थासु विद्यां व्यतरदनुदिनं स्नेहवान् शिष्यवर्गे
लेभे कीर्तिं प्रशस्यां प्रतिदिवसमथोऽध्यापने पण्डितेषु।
ज्ञानोपाह्वो विनम्रः सदसि मतिमतां यश्चलाति स्म चूलां
बच्चूलालः स तस्मादभवदतिशयाद् भारते ख्यातनामा।।7।।



आनीतः सागरेऽयं प्रथितबुधजनैर्विश्वविद्यालयेऽस्मिन्
भाषाविज्ञानशास्त्रं भुवि गहनतमं ग्राहयामास विद्वान्।
ग्रन्थान् कृत्वा गभीरान् स्वयमथ निदधे सूक्ष्मबोधाय सत्सु
विद्यावारिध्युपाधिं ह्यलभत च ततः प्राप वाचस्पतित्वम्।।8।।

यत्नाद् यो दर्शनानामश्चय दतुलं शब्दकोषं विशालं
यं दृष्ट्वा ज्ञानवन्तो दधति निजरदेष्वङ्गुलिं विस्मयेन।
इत्थं तत्कार्यजातं सकलमपि ययौ सर्वलोकातिपारं
संगोष्ठ्यां वा सभायामलभत सततं सोऽग्रपङ्क्तौ प्रतिष्ठाम्।।9।।

पश्चाद् गत्वोज्जयिन्यां न्यवसदथ महाकालदेवस्य पुर्यां
शिप्रातीरे पवित्रे प्रकृतिसुखमये कालिदासादिभूमौ।
स्वाध्याये दत्तचित्तः सततमनुवृतः शास्त्रजिज्ञासुलोकैः
सूक्ष्मं ज्ञानं ददानो यमनियमपरस्तत्त्वचिन्तानिमग्नः।।10।।

सप्ताशीतिं प्रपूर्य स्वसफलवयसः श्रीमहाकालकाल-
ध्यानात्तत्याज देहं प्रकृतिनियमतो निर्मितं पञ्चभूतैः।
देहेनासौ न दृश्यस्तदपि च यशसा वर्तते भारतेऽस्मिन्
तत्सम्पत्तिस्त्वनन्ता विलसति भुवनेऽनन्तकालाय भोक्तुम्।।11।।

यातोऽसि परमाचार्य श्रीपतेः परमं पदम्।
वयमत्र स्थिता नम्रास्तवाशीर्वादकाङ्क्षिणः।।12।।

ईशदत्तो विभुदत्तः सोमदत्तस्तथा सुताः।
उच्चैः पदेषु वर्तन्ते तस्य कीर्तिविवर्धनाः।।13।।

# महात्मा गान्धी

चिरान्निमग्नं बहुदुःखकर्दमे बृहत् समुद्धर्तुमिवेह भारतम्।
बभूव लोकश्रुत-वैष्णवान्वये गान्धी महात्मा किल मोहनाभिधः।।1।।

आजानुबाहुस्तनुसौम्यविग्रहः स्मेराननश्चारुसरोजलोचनः।
सुदिव्यभालःसुकपोलनासिकः शान्तः स्वभावेन विराजते स्म सः।।2।।

पित्रोर्गुरूणां च निदेशकारको वृद्धार्तपङ्ग्वन्धसहायकृत् सदा।
स्नेहान्वितः सत्यपरश्चरित्रवान् बाल्यादभूद् दिव्यगुणैरलङ्कृतः।।3।।

अध्येष्ट विद्यां विधिशास्त्रमेव च स्वजीविकार्थं यतमान-मानसः।
चिराय दुर्नीतिनिवारणोत्सुकः स्वयं प्रजानाञ्च सहायकोऽभवत्।।4।।

ततश्च वैदेशिकशासने नृणां सुजर्जराणां क्षुधया रुजा श्रमैः।
आर्तिं परां वीक्ष्य च देशवासिनां दधावसौ बाष्पकलां स्वचक्षुषोः।।5।।

रुग्णान् सिषेवे परिचर्यया सुधीर्निराश्रितानामभवत् समाश्रयः।
अमानयत् सर्वजनानभेदतो लेभे चरित्रैश्च महात्मतां निजैः।।6।।

सत्याग्रहेणैव निरन्तरश्रमी प्रयत्नवान् कारुणिकः कुशासकान्।
दुराग्रहाद् दूरयितुं नयान्वितो नयाय तान् प्रेरितवानहिंसया।।7।।

चकार वै जागरणं क्षणे क्षणे चचार पद्भ्यां धरणौ दिने दिने।
जगाद वार्ता विशदां गृहे गृहे सर्वत्रगोऽसौ विचचार वायुवत्।।8।।

स एव गान्धी श्रमिकः कृषीवलः सूतः कुविन्दो लिपिकृच्च भिक्षुकः।
भृत्योऽन्त्यजश्चादिभवो वनेचरः स्वजीर्ण-देहेन बभूव सर्वगः।।9।।



क्रूरांश्च निष्कासयितुं कुशासकान् सुनिर्भयाः सिंहपराक्रमान्विताः।
लोकाः प्रवृत्ता विजितेन्द्रिया द्रुतं महात्मनोऽस्यैव निदेशकारिणः।।10।।

तत्कर्म दृष्ट्वा च महत् कुशासकाः प्रजज्ज्वलुः कोपयुताः कृशानुवत्।
पर्याक्रमन्ताथ जनेषु सर्वतो भल्लैः कृपाणैर्लगुडैर्भुशुण्डिभिः।।11।।

कारागृहे त्रासमये न्यपातयन्नपीडयन् नेतृयुतान् प्रजाजनान्।
तथापि चेलुर्न जना महात्मना प्रोत्साहिता धर्मयुता दृढव्रताः।।12।।

पेषिण्या ते ह्यपिषन् यव-चणक-चयं ताडिता वेत्रतोत्रैः
शक्त्या निष्कासयन्ते स्म च कृशतनवस्तैलयन्त्रेण तैलम्।
ग्राव्णश्चास्फोटयँस्ते श्रमजलकलिलैः पीडिता ग्रीष्मकाले
भारं शक्त्या विहीना झटिति गुरुतरं वाहिता क्षुत्तृषाऽऽर्त्ताः।।13।।

देह - प्रक्षालनार्थं दरमपि सलिलं नाप्नुवन् क्वापि कष्टा-
दीषत्पक्वैः कदन्नैस्तदुदरपिटकं पूरितं चार्धमेव।
रात्रौ शय्यार्थमेकं सुशिशिरसमये कम्बलं जीर्णमेव
संकीर्णे दंशपूर्णे किमपि हि शयनं मत्कुणाकीर्णकोष्ठे ।।14।।

भग्नां स्थालीं विरूपामतिमलिनतमं तोयपात्रं च लौहं
जीर्णं वासोऽपि सर्वे चिर - विधृतचरं कच्चरं तेऽलभन्त।
सौविध्यार्थं तदोक्ते सुपृथुललगुडैस्ताडिता निर्दयं हा
निर्दन्ता भग्नभालाः कतिचिदवनतास्तेषु केचिन्मृताश्च।।15।।

कारागृहेभ्यो विनिवर्तिताः सकृद् दुःखानि मत्वा च तृणाय तानि ते।
पुनः प्रवृत्ता निजदेशमुक्तये सत्याग्रहा धैर्यपरा जितेन्द्रियाः।।16।।

निष्पेषितो यातनया कुशासकैः क्रूरैरसौ मोहनदासगान्धी।
इयेष हिंसां न कदापि कस्यचित् सत्यप्रियोऽसौ न च सत्यमत्यजत् ।।17।।

कथं नु लभ्यं लकुटेन केनचित् स्वतन्त्रता-लक्ष्यमदो महत्तमम्।
इतीव तर्कैर्हसितं जनैः पुरा परं न लक्ष्याच्चलितः स आत्मवान् ।।18।।

अथाचिराद् विघ्नचयं विनाश्य वै प्रकाशयन् विश्वमिदं गभस्तिभिः।
रराज भास्वानिव मेघमण्डलादसौ महात्मा विजयाप्ति-भास्वरः।।19।।

तस्योटजं निर्धनलोकवेदनं विनिर्मितं वक्ति पवित्रतां पराम्।
त्यागोपवासा अथ चाल्पवस्त्रता स्वतन्त्रराष्ट्रस्य यशस्यमङ्गलम्।।20।।

स्वन्नं सुवासांसि गृहाणि जीविकां शिक्षां सुखं शान्तिमथोत्तमां मतिम्।
परस्परं प्रेम वदान्यभावनां स चिन्तयामास जनस्य सर्वदा।।21।।

ऐच्छत्ततः प्रत्युटजं लघूद्यमं समुन्नतां चैव कृषिं पदे पदे।
स्वास्थ्यं पवित्रं चरितं जने जने स्वतन्त्रतां चैव परां मतौ मतौ।।22।।

वहन्तु नद्यः पयसां च सर्पिषां भवन्तु बाला बलशीलशालिनः।
रक्षन्तु देशं युवकाः समन्ततो हिताय मार्गं गुरवो दिशन्तु नः।।23।।

एवं नृणां दुःखसुखानि चात्मनो मत्वा वचोभिर्मनसाऽथ कर्मणा।
हिताय तेषां यतते स्म जीवने जगत्पतिं प्रार्थयते स्म सर्वदा।।24।।
बहूनि वर्षाणि सुरक्षितो हि यः कारागृहे यद्यपि पूर्वशासकैः।
स देवतुल्यो निजदेशवासिभिः पितेव राष्ट्रस्य हतो दुरात्मभिः।।25।।

गान्धी सकृत् प्राणहरेण मारितो हन्मो वयं किं न सदा स्वकर्मभिः।
हन्ता हि पाशेषु निलम्बितः सकृद् गान्धी च भित्तावनिशं निलम्ब्यते।।26।।



यथैकवारं हरिनामशंसनात् तरन्ति पापान्युपपातकानि च।
तथैव नाम्नाऽस्य महात्मनो जनाश्चरन्ति पापं जनमूर्ध्नि संस्थिताः।।27।।

अहिंसया सत्यदयाक्षमाश्रमैः स्नेहेन तोषेण दमेन सेवया।
प्रसन्नतां यास्यति दिव्यमानवो व्रती महात्मा परतोषतोषितः।।28।।

## जयतु जयतु गौरः*

स हि सर हरिसिंहो दानवीरो नृसिंहो
जयतु जयतु गौरः प्राज्ञमान्योऽद्वितीयः।
इह विलसति धन्यो विश्वविद्यालयोऽयं
गुणगणमहिमानं ख्यापयन् यस्य नित्यम्।।1।।

सुविदित इह बाल्याद् यो हि वह्निस्फुलिङ्गः
सुविमल इव पश्चादंशुभिर्यश्चकासे।
दिशि दिशि च ददौ यः स्फूर्तिमच्छप्रकाशं
जयतु जयतु गौरोऽलङ्कृतो गौरवेण।।2।।

क्षणश इति च विद्या अर्जिता येन भूरि
कणश इति च वित्तं प्राप्य यः कोट्यधीशः।
शरदिविहितवर्षः सर्वतः ख्यातवृत्तो
जलधर इव कीर्त्या यो विरेजे विशुभ्रः।।3।।

इह रघुरिव कीर्तिर्यस्य जागर्ति दाने
मनुरिव च विधिज्ञः सर्वतो यः प्रसिद्धः।
हरिरिव च सदा यो निर्भयो मानशीलो
जनक इव विदेहो यः सदा कार्यशीलः।।4।।

विहितमथ च विद्यादानमेव प्रशस्तं
सुखमिह च समृद्धिर्विद्ययैवाथ मुक्तिः।
इति मनसि विचार्यासौ प्रवृत्तोऽत्र मन्ये
जयतु स उभयत्र ज्ञानवान् मानवानाम्।।5।।

* 1960 ई. गौरमूर्तिस्थापनसमये सागरे।



मणिरिव च महार्घो कौस्तुभः सागरोत्थो
निजकिरणसमूहैर्भासयन् सर्वदेशान्।
गुणनिधिरिति मत्वा विष्णुनोत्थाप्य नीता
जयतु जयतु कण्ठे धारितो राजतेऽद्य।।6।।

## इन्दिराभिनन्दनम्*

चञ्चच्चन्द्रनगैः सुनिर्झरयुतैर्गङ्गादिभिः शोभिते
चत्वारिंशदथाब्धिकोटिमनुजैरासेविते भारते।
मन्त्रित्वेन सुशोभिता हितपरा ख्याता तु या स्वैर्गुणैः
श्रीमल्लालजवाहरस्य तनया सा राजतामिन्दिरा।।1।।

नेतारोप्यरविन्दगान्धितिलकाः शास्त्री सुभाषादयो
जाता राष्ट्रहितैषिणोऽतिविदिता जाताः प्रशस्ताश्च ये।
मोतीलालमहोदयस्समभवत्तेषु स्वमातुः सुतः
पूर्णं येन समर्पितं निजकुलं राष्ट्रस्य सेवाकृते।।2।।

जातस्तत्र जवाहरो गुणनिधिर्देदीप्यमानो मणि-
रासीद् यस्य सुशान्तज्ञानकिरणैः सर्वं जगद् दीपितम्।
लक्ष्मीर्यो विजया स्वनामसदृशैर्दिव्यैर्गुणैर्भूषिता
नेतृत्वं भवतात्तु मङ्गलमयं तत्रेन्दिरायास्तथा।।3।।

यत्पित्रा च सुलालितः समभवद् देशोऽयमत्युन्नतः
सम्पन्नो नवयन्त्रयानबहुलैर्विज्ञानसंसाधनैः।
शस्त्रैः शास्त्रकलादिभिर्बहुविधैः श्रेष्ठैश्च विद्यालयैस्
तस्मान्मन्त्रिमहत्पदे गुरुतमे सा राजतामिन्दिरा।।4।।

श्रीमच्छास्त्रिमहोदयेन च पुनः संरक्षितो यद्यशो
जित्वारेर्विपुलं बलं छलमयं संदर्शिता वीरता।
शान्त्यर्थं यतता प्रसन्नमनसा स्वात्माहुतो यत्र वै
देशेऽस्मिन् महतीन्दिरेव निपुणा सा राजतामिन्दिरा।।5।।

*26/01/1966 ई. दिनाङ्के विरचितम्।



विद्वांसो हितचिन्तकाः सुकुशलाः सद्बुद्धयस्त्यागिनो
ज्ञातारो जनजीवनेषु सततं दुःखस्य दैव्यस्य च।
कार्योत्साहविवर्धनाश्च सरला आडम्बरैर्वर्जिता
आगच्छन्तु च गान्धिमार्गनिरता राज्येषु सन्मन्त्रिणः।।6।।

सैन्यं स्यात् खलु सज्जितं बहुविधैः शस्त्रैर्नवीनैः सदा
वीरैस्त्यागसमन्वितैर्हि बलिभिः संरक्षणे तत्परैः।
सन्नद्धैश्च सुशिक्षितैर्नयपरैः प्रोत्साहितैर्नेतृभिः
भीतिर्येन भवेत् सदा रिपुदले गान्धीन्दिराशासने।।7।।

वैश्या राष्ट्रहिताय दानमतयो नैवार्थसंशोषका
भामाशाहनिभा निसर्गसरलाः काले च सर्वस्वदाः।
कुर्वन्तो धनधान्यशाकवसनैः पूर्णं स्वदेशं सदा
जायन्तां सुखिनो जनाश्च नितरां गान्धीन्दिराशासने।।8।।

पृथ्वी स्याच्च सुशोभिता सुरुचिरैः पुष्पैः फलैः शाखिभि
र्वापी कूपतडागवृन्दसहितैर्मार्गैश्च संशोभिता।
कुल्याभिश्च सहस्रधा सुघटिताभिः सेविता सेतुभि-
रुद्यानैश्च गृहे गृहेऽतिरुचिरैर्गान्धीन्दिराशासने।।9।।

सद्बन्धैर्नलकैः कृतैः सुचरसैः पातालकूपैस्तथा
नन्दन्तां कृषका सदा कृषिबला युक्ता नवैः साधनैः।
गोधूमैश्चणकैः समाषतिलकैः सत्कोद्रवैस्तण्डुलै-
रुद्योगैर्विविधैः कुटीरविभवैः पूर्णा महद्वैभवैः।।10।।

लोकाः कर्मरता भवन्तु सुखिनो वीरा बलैरन्विता
सद्धर्माश्च परस्परं हितपरा देशस्य निर्मापकाः।
अभ्रान्ताश्च सदाशयाश्च नितरां शिष्टास्तथा संयता
नेतृत्वेन प्रशिक्षिताश्च महता गान्धीन्दिराशासने।।11।।

नद्यो वै प्रवहन्तु दुग्धघृतयोर्भक्त्या गवां पोषणाद्
बालाः सन्तु सदा प्रफुल्लवदना हृष्टाः प्रपुष्टास्तथा।
छात्राः सन्तु सुशिक्षिता दमयता साहित्यसंरक्षकाः
सत्यं स्यात्तु प्रकल्पनं हि नितरां गान्धीन्दिराशासने।।12।।

दुष्टानां दलनं द्विषद्विलयनं विद्वत्समाराधनं
मूल्येनैव विना यथोक्तसमये न्यायस्य संरक्षणम्।
दीनानां च सुरक्षणं वितरणं चान्नस्य चाप्यौषधे-
र्भ्रष्टाचारनिवारणं च भवताद् गान्धीन्दिराशासने।।13।।

सत्साहित्यविवर्धनं हितकरं संस्कारकं सर्वदा
विज्ञानं भवताद्धिताय जगतो नो विश्वविध्वंसकम्।
कूटं चैव रिपोर्व्रजेद् विफलतां नूनं महत्कोशलैः
साफल्यं लभतां सदा सुरुचिरं गान्धीन्दिराशासनम्।।14।।

नूनं भारतसंस्कृतिर्हि जगतां सिद्धा हिता प्राणदा
सा चैवास्ति विनिर्मिता नु तपसा व्यासैर्वशिष्ठादिभिः।
अन्यैश्चैव महात्मभिर्नयपरैः सा विद्यते संस्कृते
रक्षन्ती ह्युभयं प्रसन्नमनसा सा राजतामिन्दिरा।।15।।

राधाकृष्णमहोदयो हि विदुषां नेता च राष्ट्राधिपो
नन्दाजी यशवन्तरायसहितो यः कामराजो महान्।
मन्ये यत्र सभासदश्च नितरां ये राष्ट्रसेवारतास्-
सर्वोच्चेऽत्र शुभासने जनहिते सा राजतामिन्दिरा।।16।।

इन्दिरेवेन्दिरास्माकं कल्पपादपसन्निभा।
जनानामभिवृद्ध्यर्थं भारते राजतां सदा।।17।।

## श्रीमाँल्लालबहादुरस्तु मतिमानासीन्महापूरुषः*

कायेनातिलघुः कृशोऽपि महतामालोकदः शक्तिदश्-
चन्द्रज्ज्योतिरिव स्फुरन् सुमधुरो मन्दं हसन्नात्मवान्।
पश्यन्नात्मसमं जनान् हितपरो न्यायप्रियः शीलवान्
श्रीमांल्लालबहादुरस्तु जगतामासीन्महापूरुषः।।1।।

साम्राज्ये ब्रितिशस्य वै स मिलितः स्वातन्त्र्ययुद्धे द्रुतं
शिक्षां स्वां परिहाय बालसुलभां कारागृहं भुक्तिवान्।
मातुर्बन्धनिवारणाय सुखवद् दुःखं सदा भावयन्
श्रीमांल्लालबहादुरस्तु जगतामासीन्महापूरुषः।।2।।

सन्नेता स च निर्धनप्रतिनिधिः शान्तेश्च वारांनिधिस्-
त्यागी सत्यपरः सदा च निरतः सेवासु सर्वप्रियः।
वीरश्चैव दृढव्रतश्च कुशलः सौजन्यतां शिक्षयन्
दीपो भारतसंस्कृतेश्च जगतामासीन्महापूरुषः।।3।।

वृद्ध्यर्थं च कृषेर्यथा हलधरो हस्ते हलं धारयन्
नित्यं स्वल्पमिताशनोल्पवसनः सौम्यश्च बालो यथा।
उच्चे मन्त्रिपदेऽपि नूनमभवद् राजा विदेहो यथा
रागद्वेषविवर्जितः स जगतामासीन् महापूरुषः।।4।।

दृष्ट्वा यत्समतां स्वतः सरलतां माधुर्यभावं तथा
मन्त्रित्वे दृढशत्रुणा कुटिलता पाकेन संदर्शिता।
नान्यं मार्गमवेक्ष्य येन समितौ तेषां बलं ध्वंसितं
नूनं लालबहादुरस्तु मतिमानासीन्महापूरुषः।।5।।

*जनवरीमासे 1966 ईशाब्दे।



संग्रामे सह तत्र पाकरिपुणा चीनाः समुद्वेल्लितास्
तान् दृष्ट्वा कुपितोऽभवत् स करिभिर्वीरो मृगेन्द्रो यथा।
कृत्वा गर्जनमाह निर्भयमसौ द्वाभ्यां च योत्स्ये युधि
श्रीमांल्लालबहादुरस्तु जगतामासीन्महापूरुषः।।6।।

चीना वाप्यथ पापपाकसहिता अन्यैः समुत्साहिता
टैङ्कैः सैबरजैटएफसहितैर्घोरैर्महास्त्रैस्तथा।
आगच्छन्तु च भारते भवतु किं वीरेषु संख्या भयं
श्रीमांल्लालबहादुरस्तु जगतामासीन्महापूरुषः।।7।।

अन्नं स्यान्मम देशवासिषु न वा योत्स्ये सुरक्षा-कृते
साहाय्यं यदि कूटनीतिकुशला देशा न कुर्युस्तदा।
योत्स्यन्ते मम सैनिकाः सुमतयो यामे निजान्नाशना
नूनं लालबहादुरस्तु मातिमानासीन्महापूरुषः।।8।।

कीर्तिं यां समवाप्तवान् स दशभिर्मासैस्तथा चाष्टभिः
प्राप्तुं तां नृषु सक्षमो भवति को वर्षैः सहस्रैरपि।
कार्यैरेव च लभ्यतेऽत्र मनुजैः कीर्तिर्न चार्थैरिति
सङ्केतं विदधन् नरान् स जगतामासीन्महापूरुषः।।9।।

ऐश्वर्यादिसुपूरितोऽपि विरतो नेच्छन् स्वकीयं धनं
यावज्जीवमसौ न चात्र कृतवान् कोषं न लघ्वीं कुटीम्।
पत्न्या यः पतिभक्तया ललितया देव्या सदा शोभितः
कुर्वन् लोकहितं सदा स जगतामासीन्महापूरुषः।।10।।

न स्यात् कोऽपि बुभुक्षितो न हि कृशो नग्नस्तथा पीडितो
मूर्खो नैव निरक्षरो न हि रुजा युक्तो भवेन्मानवः।
ध्यायंस्तन्मनसा तथैव वचसा तद्वच्च संभावयञ्-
श्रीमांल्लालबहादुरस्तु जगतामासीन् महापूरुषः।।11।।

दृष्ट्वा भारतवीरतां कुशलतां मानं जयं चैकतस्
तास्कन्दे खलु राजनीतिनिपुणैर्वार्ता समारोपिता।
वाञ्छंल्लोकहितं स तत्र गतवान् वार्तां च संमानयन्
नूनं लालबहादुरस्तु जगतामासीन्महापूरुषः।।12।।

कोशीजीनमुखैः प्रभावविपुलैरन्यैर्महानेतृभि-
र्वार्ता सा कतिचिद् दिनान्यसफला जाता अयूबेन वै।
त्यक्त्वा तत्र कलेवरं स कृतवान् रक्षंश्च सत्यं तदा
सन्धिं सर्वहिताय हन्त जगतामासीन्महापूरुषः।।13।।

उदश्रुर्विस्मयाविष्ट इतिहासः पदे नतः।
स्थितस्त्वं यासि सेनानिन् त्रिदिवं भारतग्रणीः।।14।।



# सेवाव्रतं गृह्यताम्*

भो मन्त्रिण्यखिलस्य भारतजनस्यारक्षिके प्राणवत्
देशोऽयं विततो महान् सुतपसा त्यागाच्च संसाधितः।
प्राणानां च पणैः सुसैनिकवरै रक्तेन संरक्षितः
स्वातन्त्र्यस्य दिनेऽस्यशुद्धमनसा सेवाव्रतं गृह्यताम्।।1।।

प्राणेभ्योऽपि प्रिया ध्रुवं स्वतनया यत्रार्पिता मातृभिः
सिन्दूरं शिरसामपीह बहुशः सीमन्तिनीनां गतम्।
यस्यार्थे च निराश्रया गतसुखा जाताः प्रिया बालकाः
स्वातन्त्र्यस्य दिनेऽस्य शुद्धमनसा सेवाव्रतं गृह्यताम्।।2।।

चारित्र्यस्य बलेन नूनमखिले देशा भवन्त्युन्नताः
पश्यन्त्या किल सर्वतो जनहितं दाढ्र्येन रक्षाकृते।
भारस्त्यागिजनेष्वतः सुमहतो राष्ट्रस्य वै दीयतां
स्वातन्त्र्यस्य दिनेऽद्य शुद्धमनसा सेवाव्रतं गृह्यताम्।।3।।

प्रायो लुण्ठनवृत्तयश्च कुटिला व्यापारिणो दस्युवद्
राज्ये शासनवर्तिनोऽपि विविधं लुण्ठन्ति दीनाः प्रजाः।
अन्यैः कुत्सितवृत्तिभिर्नृपशुभिर्यज्जीवनं दुर्घटं
स्वातन्त्र्यस्य दिनेऽद्य शुद्धमनसा सेवाव्रतं गृह्यताम्।।4।।

शिक्षायां परिवर्तनं हितकरं नाद्यापि दृष्टं क्वचिन्
नेतारः सततं त्वहो निजपदं रक्षन्ति वै केवलम्।
ये शक्ताः कुटिलाश्छलाद् विदधते काञ्चिन्न सेवां क्वचित्
स्वातन्त्र्यस्य दिनेऽद्य शुद्धमनसा सेवाव्रतं गृह्यताम्।।5।।

---
*स्वतन्त्रादिवसे 15/08/1966 ई. दिनाङ्के प्रधानमन्त्रिण्यै लिखितं पत्रम्।

क्षन्तव्यो यदि केचिदत्र कथने दोषा भवेयुस्तदा
दोषान्नैव विनिर्दिशामि न च मे वृत्तिर्भवेत्त्वीदृशी।
देशोऽयं विततो महान् सुतपसा प्राप्तः पुनस्त्यागतः
स्वातन्त्र्यस्य दिनेऽद्य शुद्धमनसा सेवाव्रतं गृह्यताम्।।6।।



# श्रीराष्ट्रपतये पत्रम्*

पीयूषेण समं पयो दधिघृतं ह्यारोग्यपुष्टिप्रदं
वत्सानुर्वरकं सदा कृषिहितं यच्छन्ति या गोमयम्।
तासामेव वधो भवेद् यदि नराः श्रेष्ठाः कथं प्राणिनां
किं तेषां पठनैः श्रुतैर्बहुविधैर्बुद्धेर्विलासैश्च किम्।।1।।

बाला म्लानमुखा विनैव पयसा रोगैः कृशा निर्बलाः
दृश्यन्ते युवकास्तथा युवतयस्तेजो विहीना इह।
शक्तः कोऽपि कलेवरे गणयितुं सर्वाणि चास्थीन्यपि
खेदस्तत्र गवां वधः प्रतिदिनं तेषां न वै पालनम्।।2।।

नद्यो वै घृतदुग्धयोः समवहन् पूर्वं वृहद्भारते
दुग्धं यत्र जलेच्छवोऽप्यतिथयः संप्राप्नुवन् स्नेहतः।
तत्रैवाद्य जलं लभेत मनुजो दुग्धस्य मूल्येन चेद्-
धेतुः कोऽत्र गवां वधे प्रतिदिनं चैतद् विचिन्त्यं बुधैः।।3।।

रक्षार्थं सततं मुखे धृततृणा बद्धा गले धेनवो
याचन्ते ऽतिकृशा ध्रुवं त्रिभुवने प्राणाः प्रियाः प्राणिनाम्।
अस्माभिर्भवतामहो सुमतयः कि वापराद्धं नरा
दुग्धं भूरि सुधोपमं पिबत रे मांसेन किं सज्जनाः।।4।।

पुत्राः सात्विकबुद्धयो भवत रे पुष्टाश्च मत्सेवया
युष्मभ्यं नवपादुकाश्चरणयोर्मृत्वापि दास्यामहे।
अस्थिभ्यो भविता जना अनुपमो धान्यस्य लाभो महान्
कोऽर्थस्तत्र वधेन नः सुमतिभिश्चिन्त्यं निजे मानसे।।5।।

*गोरक्षान्दोलनसमये श्रीराष्ट्रपतये राधाकृष्णन् महोदयाय 23/11/1966 ई. दिनाङ्के लिखितं पत्रम्।

सम्राट् सूर्यकुलोद्भवः पृथुयशा वीरो दिलीपो महान्
धेनुं सेवितवान् गुरोः सविनयो यत्र प्रजाः पालयन्।
कायस्यार्पणनिष्क्रयेण सुमतिः सिंहाच्च रक्षन् पुन-
र्लेभे प्रीतिकरं सुधांशुवदनं तस्याः प्रसादात् सुतम्।।6।।

बाल्मीकिर्मुनिपुङ्गवः समभवत् संरक्ष्यया: कानने
स्वप्राणा जमदग्निना च मुनिना धेनोः कृते स्वर्पिताः।
दुष्टानामशनिर्दुरात्मदमनो वीराग्रणीर्धार्मिकः
कृष्णो ब्रह्मविदां वरः समभवद् बाल्याद् गवां सेवया।।7।।

निर्जिह्वाजननायकाः समभवञ्श्रोत्रैर्विहीना इव
ज्ञात्वा देशदशां तथा परिणतामुन्मत्तवत् संस्थिताः।
दुग्धं यत्र न दृश्यते प्रतिदिनं तत्रैव धेन्वां वधः
पाल्यन्ते न हि तास्तदा भवति वा राज्यस्य दोषो न किम्।।8।।

भावोऽयं यदि धार्मिको ननु भवेद् धर्मो धरा धारको
नाधर्मेण जनस्थितिर्भवति वै प्राप्तिर्न दुग्धान्नयोः।
श्वानः सूकरकुक्कुटाश्च वतका अन्नैः क्षितौ पालिता
हन्यन्ते कपिला अहोऽथ पयसोऽभावेन लोकाः कृशाः।।9।।

चत्वारोप्यथ पञ्च वा दश नरा मांसेन चैकस्य गोस्
तृप्तास्त्वेकदिनाय किन्तु कियती राष्ट्रस्य हानिः कृता।
रक्षायाममृतोपमेन पयसा तुष्टिश्च पुष्टिश्च वै
खाद्यान्नं बहु गोमयेन भविता भोक्तुं तथा भारते।।10।।

श्रोतुं न प्रभवन्ति संसदि जना देशे प्रजानां वचः
साधूनां सुविवेकिनामपि महद्राष्ट्रे प्रजातान्त्रिके।
न्याय्यं यत् कथितं प्रजाहितकरं मत्वा हठं त्यज्यते
कोऽन्यः श्रोष्यति वा तदेह वचनं देशे प्रजायाः ध्रुवम्।।11।।



मन्ये गोवधनिश्चयो धनवतां वैदेशिकानां कृते
केषांचित् कलधारिणां हितकरस्वार्थस्य संसिद्धये।
सर्वेषां च हिताय नो भवति वै पक्षश्च यः स्वार्थिनां
पाल्यन्तामिह धेनवः सुखकरास्तासां वधस्त्यज्यताम्।।12।।

भो भो राष्ट्रपते! रक्ष्या धेनवो राष्ट्रसंपदः।
मानवाः सुखिनः सन्तु तुष्टाः पुष्टा विवेकिनः।।13।।

## कुत्र स्थितस्त्वमसि कृष्ण नु सङ्कटेऽस्मिन्*

क्षीणो यदा भवति कालवशेन धर्मो
लोका अधर्मनिरताश्च दयाविहीनाः।
रक्षां करोषि च सतामसतां विनाशं
कुत्र स्थितस्त्वमसि कृष्ण नु सङ्कटेऽस्मिन्।।1।।

चीनाः सुपीतवदना लघुनिम्ननासाः
खर्वा जनैरगणिताः प्रतिबद्धवैराः।
मिथ्याबला भुवि गता अतिगर्जमानाः
कुत्र स्थितस्त्वमसि कृष्ण नु सङ्कटेऽस्मिन्।।2।।

पाकास्तु वक्रगतयो हि भुजङ्गतुल्या
दुष्टाः सदैव मुखतो विषमुद्वमन्ति।
मिथ्याब्रुवोऽतिकुटिला लघुराज्यलोभात्
कुत्र स्थितस्त्वमसि कृष्ण नु सङ्कटेऽस्मिन्।।3।।

वैदेशिका अमरिका ब्रितिशाः सरूषाः
स्वार्थं ब्रुवन्ति न हितं खलु कूटविज्ञाः।
कुर्वन्ति ते किमपि वै कथयन्ति किञ्चित्
कुत्र स्थितस्त्वमसि कृष्ण नु सङ्कटेऽस्मिन्।।4।।

क्रान्तं यदा रिपुगणैर्मम भारतं हि
तूष्णीं तदा तु कुटिला अभवन् नृशंसाः।
देशो यदा हि विजयध्वजमाप हस्ते
कोलाहलं बहुविधं विदधुस्तदा ते।।5।।

*चीनाक्रमणसमये विरचितानि पद्यानि (वसन्ततिलका)।



लग्नाः सदैव वणिजो धनशोषणे चे-
दारक्षिणो गतदया जनतासु धृष्टाः।
न्यायालयेषु समये न हि निर्णयाश्च
कुत्र स्थितस्त्वमसि कृष्ण नु सङ्कटेऽस्मिन्।।6।।

राज्येषु ये महति मन्त्रिपदे नियुक्ताः
सर्वत्र सञ्चयरता सहयोगिभिस्ते।
अन्येऽपि लुण्ठनरता विचरन्ति केचित्
कुत्र स्थितस्त्वमसि कृष्ण नु सङ्कटेऽस्मिन्।।7।।

क्रेतुं न केचन कणान् प्रभवन्ति निःस्वाः
क्रन्दन्ति दीनमनुजा विवशाः क्षुधार्ताः।
अन्योन्यविग्रहरताः प्रतिवेशिनश्च
कुत्र स्थितस्त्वमसि कृष्ण नु सङ्कटेऽस्मिन्।।8।।

## कश्चिद् बालः

बालः पृच्छति कोऽपि कस्य सदयो मार्गगतं भिक्षुकं
कोऽसि त्वं ननु भिक्षुको निवससि क्वास्ते गृहं वा तव।
नो गेहं निवसामि यत्र विटपो मार्गैकदेशेऽथवा
शून्ये वा सुरमन्दिरेऽथ भवने जीर्णे बहिः संस्थिते।।1।।

माता क्वास्ति दिवं गता न हि मया दृष्टा पिता नास्त्यसौ
बाल्ये सोऽपि मृतोऽस्ति कतिचिद् वर्षाणि यातानि मे।
किं कार्यं जनयाचना प्रतिदिनं तुच्छोदरापूर्तये
काठिन्येन हि लभ्यते किमपि तत् स्वन्नं कदन्नं च वा।।2।।

कार्यं किं न करोषि हस्तविकलः शक्नोमि कर्तुं न हि
प्रासादात् पतितोऽस्मि कस्य धनिनः कार्यं विधातुं गतः।
जाता तत्र दशेदृशी मम तदा भाग्यादहो दुःखिनः
किं दत्तं धनिना तदा किमपि न स्वार्थश्च कस्तस्य वै।।3।।

वासांसि क्व गतानि तेऽतिकठिने शीते कथं कम्पसे
कुत्रासन् न ददाति कोऽप्यकरुणो लोकोह्ययं निर्घृणः।
पात्राणि क्व वदामि बाल न हि ते वक्तुं समर्थो दशां
द्रष्टुं नेच्छति मां जनः किमपि वा वार्ता च का कीदृशी।।4।।

किंवा त्वं पठितोऽसि वाप्यपठितः कः पाठयेन्मामहो
भ्राता ते नहि मातुलः क्व भवतो नास्त्येव नूनं स मे।
स्यात्त्वेवं तु पितामहः स च न मे नूनं पितृव्यः क्व ते
सर्वे ते नहि सन्ति मे शृणु वचो व्यर्थं कथं पृच्छसि।।5।।



गन्तुं वेच्छसि किं गृहे मम सखे माता दयालुर्हि मे
स्वाद्वन्नं बहु दास्यति द्रुतमहोऽप्यायाहि सत्येन मे।
तातः शीतनिवारणाय सदयो वासांसि ते दास्यति
मद्गेहे वस यावदिच्छसि सखे शीतोष्णवर्षासु वा।।6।।

श्रुत्वा तद्वचनं गतः स तस्य भवने बालस्य विश्वासतः
कृत्वाग्निं परितापितः स दयया मात्रा सुखं प्रापितः।
स्वाद्वन्नेन  च पूर्णतां च गमितो वस्त्रैश्च सन्तोषितः
तत्पुत्रेण सुसत्कृतोऽथ सदयं गेहे सुखं वासितः।।7।।

स्वत्वं प्राप्य तथाविधं स नितरां मेने तदा संस्थित
आनन्दे खलु देवदुर्लभतरे ध्यात्वा हरिं प्रोक्तवान्।
बालः स्यादमृतो गुणी च धनवान् पूर्णः सखैर्वैभवैः
पित्रोर्लोचनयोः सदा प्रियतर कुर्यात् शुभं मङ्गलम्।।8।।

## हेमन्तः

यवातसीसर्षप पल्लवानां
गोधूमकानां हरितप्रदेशैः।
विभाति शृङ्गारवती धरित्री
प्रतीक्षमाणेव हरिं विनम्रा।।1।।

स्वच्छानि शीतानि सरोवरेषु
वारीणि सद्दर्पणसन्निभानि।
तथाप्यभावो मृदुपद्मिनीना-
माबाधते चेतसि मानवानाम्।।2।।

मुक्ताफलानीव तुषारबिन्दून्
पात्रे समादाय बहूनि भूमिः।
आगन्तवे योग्यतमाय दातुं
प्रातः प्रवृत्तेव सुखं सवित्रे।।3।।

पक्वानथो ज्वारकणांश्च जग्ध्वा
नृत्यन्ति गायन्ति सुखं विहङ्गाः।
कीनाशवर्गैरुपसारितास्ते
निजाधिकारादिमे संविशन्ति।।4।।

प्रचण्डरश्मिः किल दक्षिणाशां
प्राप्तो विभातीह हिमांशुतुल्यः।
दिनानि जातानि लघूनि रात्र्यो
भवन्ति दीर्घा अतिशीतलाश्च।।5।।



तुषारपाताच्च यदा दिनेशः
सान्द्रेषु धूमेष्विव लीन आस्ते।
तदा दिनेष्वेव घनान्धकारे
सूर्यं जगद् दृष्टिपथं न याति।।6।।

वर्षन्ति मेघाः प्रचुरं कठोरा
नीरं कदाचित् करकान् कठोरान्।
विनाश्य सस्यं कृषकान् व्यथार्तान्
कृत्वा परायान्ति यथा नृशंसाः।।7।।

## मधु वर्षति मधुमासः

मधु वर्षति मधुमासः सख्यो
माधवाग्रजो ललितः।
नवसंवत्सरसंप्रवर्तको
मासानां संप्रथितः।।1।।

कोमलकिसलयकृतपरिधाना
विकचितकुसुमाभरणा।
वैकुण्ठादागतेव लक्ष्मीः
प्रकृतिर्विलसति धन्या।।2।।

दिशः प्रसन्ना विमलं गगनं
ह्रदे प्रसन्नं सलिलम्।
मधुमत्यः प्रवहन्ति तटिन्यः
कुसुमैस्तटं सुरभितम्।।3।।

प्रातर्दिनकररश्मिधेनवः
पय इव मधु वर्षन्त्यः।
वत्सप्रजापालने दक्षाः
शुशुभुर्बहिरायान्त्यः।।4।।

मधुभिः परिषिक्तानि सुमानि
वल्लर्यो वर्षन्ति।
सुखस्पर्शिनः स्निग्धा वाता
मधुमन्तः प्रवहन्ति ।।5।।



नानावर्णा विधिकररचिताः
सद्यो मनो हरन्तः।
गायन्तो नृत्यन्ति सुरुचिरं
विहगा दिवः पतन्तः।।6।।

मधु वर्षति मधुमासो महित
माधवाग्रजो ललितः .........

गगनसुनीले वापीसलिले
मुकुरनिभेऽरुणमसृणः।
मधु वर्षति नलिनीनलिनानां
समवायः स्मितवदनः।।7।।

सुस्मितवदना युवतीयुवकाः
पथि पथि मधु वर्षन्ति।
सरसिजमुखा केलि संलग्ना
बाला मनो हरन्ति।।8।।

एष मृदुलसहकारमञ्जरी
स्वादकषायितकण्ठः।
मुधु वर्षन्निव मधुरं रौति
कुहू कुहू कलकण्ठः।।9।।

रजनीदयिताननादं शुकं
स्वकरैर्दूरी कुर्वन्।
उदयति तुहिनांशू रमणीयो
गगनपथे मधु वर्षन्।।10।।

दर्शं दर्शं ज्योत्स्नालोकं
प्राणिभृतो नन्दन्ति।
इतः कुमुदिनीवक्त्रविलास-
स्मितानि मधु वर्षन्ति।।11।।

शुकः सारिकां पृच्छति चैकां
परतन्त्रौ कथमावाम्।
साऽवोचत् खलु मधुरभाषणात्
पञ्जरसंस्थावावाम्।।12।।

कुसुमानां मधु पायं पायं
मधुपदम्पती व्राताः।
वादयन्ति मधुरामिव वीणां
मन्दं झङ्कृतिनिरताः।।13।।

मधु वर्षति मधुमासः सोऽयं
माधवाग्रजो ललितः
नवसंवत्सरसंप्रवर्तको
मासानां संप्रथितः................



## केचित् प्रश्नाः

दिनानि मासाः कति वत्सराश्च
युगानि कल्पा मनवश्च मार्गे।
कति व्यतीतानि हि जीवनस्य
कालोऽवशिष्टश्च कियान् न जाने।।1।।

कुतः समायाति तवैष पन्था
दूरं कियद् यास्यति कुत्र यावत्।
श्रान्तौ च पादौ चलनात् तथापि
ददाति धैर्यं चलनाय कश्चित्।।2।।

प्रयोजनं किं गमनस्य गम्यं
स्थलं च किं कुत्र च यामि नाथ।
प्रश्ना ममैते मनसि प्रसह्य
प्रादुर्भवन्त्युत्तरितुं त्वमेव।।3।।

महार्हहर्म्याणि मनोहराणि
दृश्यानि वीभत्सतमानि चैव।
दृष्टानि सोढा मृदुला कठोरा
भावाश्च यात्रासु मया अनन्ताः।।4।।

भूयः प्रहारा स्खलनानि भूय
उत्थाय भूयः पतनानि चैव।
कष्टानि हानिः कटुकानुभूतिः
सोढानि कुत्रापि नहि प्रतोषः।।5।।

अटामि मुग्धश्च भवाटवीषु शान्तिर्नमेऽद्यावधि काचिदस्ति।
सौख्याम्बुधिस्त्वं खलु दीनबन्धो मनोव्यथां संहर सत्वरं मे।।6।।

चलामि शास्त्रैरुपदिष्टमार्गे सदा चलिष्यामि च तावदेव।
यावन्न लप्स्ये तव पादपद्मसुधालवं स्वादुतमं प्रपन्नः।।7।।



## केचिद् बालाः

स्वर्णाभानां दिनमणिकराणां गवाक्षात् प्रवेशे
स्नेहाद् दृष्ट्वा वदनकमलं कुन्तलं संस्पृशन्ती।
काचिन्माता मुधुरवचसा बोधयत्यात्मजं स्वं
वेला शालामियमुपनता गन्तुमुत्तिष्ठ तात।।1।।

हेमन्तर्तौ निशि च चिबुके जानुनी अर्पयित्वा
कश्चिद् बालो मलिनवसनः शीतले ग्राव्णि पीठे।
श्रान्तः सुप्तः प्रशिथिलतनुः कम्बले छिद्रजीर्णे
प्रातः पद्भ्यां परुषवचसा बोधितो भर्त्सितश्च।।2।।

प्रातः कालात्तडिदिव जवाद् विस्तृतं दारुपीठं
प्रोञ्छत्यच्छं स दिवसनिशं दिक्षु चङ्क्रम्यमाणः।
भक्ष्यं पेयं दधिमधुररसं भर्त्सितो ग्राहेकभ्यः
पण्यागारे नगरधनिभिर्योजितो लाति सद्यः।।3।।

केचिद् ग्रीष्मे तरणिकिरणैर्नग्नपादाः सुतप्ते
मार्गे दृष्ट्वा तपति दिवसे ह्यागतं वाष्पयानम्।
धावन्त्याशु त्वरितगतयो वृत्तपत्रोत्कराश्च
धृत्वा हस्तेऽहमहमिकया काङ्क्षया वै पणानाम्।।4।।

बालाः केचिच्छिशिरपवनैः कम्पमाना उषाया-
मुष्णं पेयं स्वगृहपतये विष्टरे दातुकामाः।
भीता म्लानाः प्रतनुवसना दुग्धमानेतुमाशु
दृश्यन्ते वै पथि पथि पयोवाहनं वीक्षमाणाः।।5।।

भिक्षापात्रं कृतविकृतयो हन्त हस्ते दधाना
जीवन्त्येके पथि पथि मुखं दानिनां वीक्षमाणाः।
बालानां चेज्जठरपिटके वर्धते क्षुत्कृशानुः
किं तैः कोषैर्निभृतविभृतैर्नैतृभिर्वान्यलोकैः।।6।।

दुष्टैर्धूर्तैरुदरभृतये का कदाचित् पितृभ्यां
विक्रीता वै कतिपयपणैर्बालका बालिकाश्च।
केचिल्लग्ना अहनि कठिने तु श्रमे भाग्यहीनाः
श्रान्ता रात्रौ खलु विषयिणां तृट्प्रशान्त्यै भवन्ति।।7।।

सर्वत्रैव स्थितिरियमथवा सर्वकालं पृथिव्या-
मासीत् को वा भवति मलिमानन्यथा कर्तुमीश।
किं प्रश्वासैर्भवति दयया कोऽप्युपायः प्रयत्ना-
दुद्धारार्थं झटिति सुकरश्चिन्तनीयः समर्थैः।।8।।



## नग्नो युवा भीतिकरोऽद्य भूतले

स्वधर्मनिष्ठा हृदयाद् विलुप्यते
न प्राणिनां जीवनमूल्यमस्ति च।
स्वबुद्धिसंशोधनसाधनान्यपि
स्वयं प्रयातानि रसातले शनैः।।

नग्नः शिशुः सन्तनुते सुखं नृणां
स्तनन्धयश्चारु विलोकयन् जनम्।
परन्तु रत्नाम्बरवैभवैर्युतो
नग्नो युवा भीतिकरोऽद्य भूतले।।

यथा यथेच्छत्यभिरामतां नवां
कुरूपतां सन्तनुते तथा तथा।
भ्रष्टो दुराचाररतो दुराग्रही
शिष्टैर्वृतो मुख्यपदेषु शोभते।।

## लङ्केश्वरस्वर्णपूरीव सैषा

बुद्धिं वधूं भावयितुं सदैव
नाना विलासैश्च विमोहयन्ती।
चकास्ति भोगैर्जगती समृद्धा
लङ्केश्वरस्वर्णपुरीव सैषा।।

सन्देशमादाय हरेश्च कश्चित्
पुण्यं श्रुतौ संवदतीव रम्यम्।
त्वामेत्य वा नेष्यति देवदेवो
विमोच्य बन्धात् खलु रामभद्रः।।

सौन्दर्यसारो मधुरः स पूर्णः
प्रेम्णो ह्यभिज्ञानमिदं स्मृतेश्च।
यत्स्पर्शतो दिव्यसुखानुभूतिः
प्रेक्षस्व तं केवलमत्र पुर्याम्।।

व्यग्रा च बाह्ये प्रकृतिस्तदन्त-
र्विश्रान्तिराज्यं हृदये विशालम्।
कोलाहलो यत्र कृतोऽपि यन्त्रै-
र्वीणाध्वनौ वै परिवर्तनीयः।।

सङ्गीतरूपेण च गायकस्य
कवित्वरूपेण महाकवेश्च।
कलाविदां चित्रकलासु सर्वा
स्वानन्दरूपेण विराजतेऽसौ।।



न केवलं चास्ति शरीरशुद्धे-
र्हेतुर्जलं तत् खलु चेतसोऽपि।
न चास्ति देहस्थितिरेव पृथ्व्या-
माह्लादकत्वं च सहैव तत्र।।

अज्ञाय लोकाय विलासभूमि-
रियं हि सर्वा जगती विशाला।
विवेकिने सास्ति नियुद्धभूमि-
राजीवनं यत्र च युद्ध्यतेऽसौ।।

# पाटलपुष्पम्

प्रसन्नता पाटलपुष्पकण्टका-
सनस्थितस्यापि विलोक्यते परा।
स्वदुःखखिन्नोऽपि जनः प्रसन्नतां
प्रयाति सद्यः किमुतापरो न हि।।

छायां विना त्वं सहसे निरन्तरं
सहस्ररश्म्यातपतापमुल्वणम्।
तुषारवर्षामुपलप्रताऽनं
वायुप्रकोपं सलिलप्रवर्षणम्।।

तथापि कुत्रापि न खेदलक्षणं
विलोक्यते हन्त जनैस्तवानने।
क्व योगयुक्तिः खलु शिक्षिता त्वयाऽ-
नासक्तिभावश्च कुतोऽयमीदृशः।।

ब्रूषे न किञ्चित् स्मयसे गतस्मयो
निजे गृहेऽप्याद्रियसे समीरणैः।
गन्धं सुरम्यं प्रददासि निःस्पृहः
समागतेभ्योऽतिथिभावतः समम्।।



# स्थलकमलविकासो वीक्षितः कण्टकेषु

स्थलकमलविकासो वीक्षितः कण्टकेषु
हसति सरसिजं वै पङ्कमध्याधिरूढम्।
अरणिमथनतोऽग्निर्जायते तीव्रतेजाः
कठिनतनुतपोभिर्जायते वै महात्मा।।

प्रतिवनमटमानः सीतया विप्रयुक्तो
रघुपतिरवनीराः साहसोत्तीर्णसिन्धुः।
निहतनिशिचरौघो रावणं सन्निहत्य
पुनरधिगतराज्यो राजते स्म प्रसन्नः।।

यदुकुलकमलेशो वन्दिगेहेऽपि जातः
प्रबलरिपुसमूहैरावृतो यो हि बाल्यात्।
क्वचिदपि निजधैर्यान्नाचलत् किन्तु लोकैः
स्मितमुखकमलोऽसौ वीक्षितः सर्वदैव।।

## सर्वं जगत् सुखमयं च सहायकं च

पृथ्वी ददाति रुचिरं सुनिवासधाम
जीवाश्च शान्तिमुपयान्ति जलं निपीय।
वह्निः सदा शिशिरशीतमपाकरोति
प्राणान् ददाति गतिमांश्च समीरणोऽयम्।।

आकाश एष विततोस्त्यवकाशदाने
लोकान् स्वकर्मसु नियोजयतीव भानुः।
आह्लादको हिमकरश्च सदा जनानां
सर्वं जगत्सुखमयं च सहायकं च।।

उक्तं मनीषिभिरहो भगवत्स्वरूपं
सच्चिन्मयं विलसतीह जगत् समग्रम्।
दृष्टं विभिन्नमपि नैव ततो विभिन्नं
तोयोर्मिवत् सुखमयं च सहायकं च।।

वृक्षाः फलानि कुसुमानि मनोहराणि
यच्छन्ति मातृसदृशा अरितो जलानि।
गायन्ति चारुविहगा इह मोदमाना
सर्वं जगत् सुखमयं च सहायकं च ।।



## धर्मः

इयं प्रवृत्तिः प्रसृता नवीना
त्याज्यो हि धर्मो नितरामपार्थः।
दृष्टा अनर्था बहवः पृथिव्यां
स्वतन्त्रताऽनेन कृता विदूरे।।

मिषेण धर्मस्य नरा असङ्ख्या
हता नृशंसैरपराधहीनाः।
सङ्कीर्णतां याति मतिस्त्वनेन
द्विषन्ति तस्माच्च परस्परं ते।।

वदन्ति सन्तस्त्वथ धर्म एव
जनान् मिथो योजयितुं समर्थः।
तदन्यथा शृङ्गविषाणहीनो
भ्रमन् जनो भाति पशुः प्रमत्तः।।

हत्याग्निकाण्डौ महिलापहारा
नृशंसता यत्र च धर्मनाम्ना।
त्याज्यो विनिन्द्यो मनुजैः स मार्गो
यः स्वार्थिभिर्द्वेषवशात् प्रवृत्तः।।

द्रवत्ववद् वारि सुशीतलं च
पथ्यं हितं वै मधुरं स्वभावात्।
दहत्यदः क्वापि कृशानुसङ्गात्
तद्दाहकत्वं किल वह्निधर्मः।।

एवं स्वपापात् कुमतिप्रभावात्
कुतर्कयोगाद् विषयानुरागात्।
वदन्ति धर्मं किल दुःखमूलं
दोषान् निजान् केचन गूहमानाः।।

प्रोतं सुविज्ञानमिदं हि धर्मे
सनातनेऽस्मिन्नतिसूक्ष्मसूक्ष्मे।
परीक्ष्यते किं न निजप्रयत्ना-
दज्ञानिवाक्यैरिह मुह्यते किम्।।

पिपीलिकाया अपि जीवनस्य
प्रोक्तं पुराणे मुनिभिर्महत्त्वम्।
मार्गं विलोक्यैव चलन्ति सन्तः
पापाद् विभीता ननु जीवहानेः।।

निरर्थकं यत्र पलाशिपत्र-
च्छेदं च नाज्ञापयतीह शास्त्रम्।
का तत्र दृष्टा तव हानिशङ्का
कथं प्रलापः क्रियते च तद्वत्।।

जीवन्ति शृण्वन्ति रुदन्ति वृक्षाः
पश्यन्ति जिघ्रन्ति च शास्त्रवाक्यम्।
बुधैः प्रयोगैरपि चाद्य सिद्धं
यत्र प्रमाणं जगदीशचन्द्रः।।



सर्वेऽपि जीवा भगवत्स्वरूपा
द्रव्यं परेषामथ लोष्ठतुल्यम्।
न्याय्याच्च मार्गाच्च धनार्जनं वै
कुत्रास्ति धर्मः कलहस्य हेतुः।।

चलन्ति लोका अनिरीक्षमाणा
अन्धैर्जनैर्नीयमाना यथान्धाः।
जल्पन्ति धर्मं प्रति किञ्चिदेव
ग्रन्थानधीत्यैव तथाविधांस्ते।।

# इयं धर्मशाला

क्षणं धर्मशाला निवासाय दत्ता
समायान्ति केचित् प्रयान्त्येव चान्ये।
इतो यात्रिकाः स्वार्थकामा हि सर्वे
न कश्चिद् धितः कस्यचिद् दृश्यतेऽत्र।

न सार्धं प्रयास्यन्ति केचित्त्वयात्र
सहाया न मार्गे भविष्यन्ति चाथ।
समायात एकस्त्वमेकः प्रयास्य-
स्यतो नात्र वाञ्छां कुरुष्वाथ काञ्चित्।।

पिबन्तीह खादन्ति भुञ्जन्ति भोगान्
मिलित्वाऽपि सर्वे तदा यल्लभन्ते।
समाहृत्य वित्तादिकं स्वस्वमेव
गमिष्यन्ति सर्वे यथेष्टां दिशं ते।।

भजस्वेह रामं स सार्धं तवास्ते
हितः सर्वदा स्नेहकर्ता दयालुः।
समर्थो महान् सर्वकर्ता प्रदाता
स मुक्तः स्वयं मोक्षदश्चान्तरात्मा।।

न पापं कुरुष्वेह भोगाय तस्मान्
न तूद्विग्नतां कस्यचित्त्वं विधेहि।
समुद्विग्नचित्तो न भूयाः कदाचिद्
भजस्वासुखानां विरामं हि रामम्।।



# प्रकृतिसौन्दर्यम्

नीलं व्योम विराजतेऽत्र विततं पारं न यस्य क्वचित्
तारा यत्र महाग्रहा मितिपरा सान्द्राः पराः कोटिशः।
दूराद् दूरतमाः प्रकाशबहुलाः पृथ्व्या विशाला अपि
द्योतन्ते विमले पयोनिधिजले स्वल्पा यथा बुद्बुदाः।।

यद्येते मिलिताः प्रकाशमधिकं दद्युः पृथिव्यां न चेद्
गाढान्धे तमसि स्थिता जगति ते जीवा भवेयुः कथम्।
ओषध्यः समहीरूहा वनलता पुष्पाणि पत्राणि वा
सस्यं नापि तृणं फलानि न च वा स्युर्गोचरा भूतले।।

नक्षत्राणि तिरोभवन्ति गगने ध्वान्तं च सूर्योदये
साम्राज्ये बलिनो यथा नरपतेस्तेजस्विनो दस्यवः।
कह्लाराणि हसन्ति तत्र मधुपा गुञ्जन्ति मन्द्रस्वरैः
कर्तव्येषु जना भवन्ति निरतास्ते सोद्यमाः प्राणिनः।।

प्रोत्तुङ्गा हि सहायका इव घना रात्रिं चराणां खला
सान्द्राः प्रेक्ष्य नभोगतं दिनमणिं रोद्धुं प्रवृत्ता इव।
गर्जन्तः परितः पतन्ति नितरां प्रातः समन्तात् परं
तेजस्वी स निवार्य तान् स्वकिरणैर्बाणैरिवाशोभते।।

ये वा पर्वतनिर्झराः स्फटिकवत्स्वच्छैर्जलैः शोभिता
येषां वारिविचूर्णितं च कणशो यातं भवत्यूर्ध्वतः।
भानोर्दीधिति रञ्जितं यदतुलं शक्रायुधं शोभते
मन्ये सा च पुरस्कृतिर्हि महते सूर्याय दत्ता भवेत् ।।

नद्यश्च प्रवहन्ति कल्कलरवैर्वातध्वनिः श्रूयते
गाहन्ते सलिले जनाः समुनयः श्रद्धालवो धार्मिकाः।
अर्घाणां च समर्पणैर्दिनमणिं स्वर्चन्ति भक्त्या विभुं
घण्टाशङ्खनिनादितैश्च भगवान् सम्पूज्यते मन्दिरे।।



## मातुर्हि चित्ते सततं स बालः

उत्थाप्य बालं हृदयेऽर्पयित्वा
निधाय चाङ्के मृदु लालयन्ती।
पातुं स्तनं तस्य मुखे ददाना
माता सदाप्नोति परं प्रमोदम्।।

मुखे स्तनस्पर्शनतः स्वभावान्
मातुः स्तनाभ्यां क्षरतेच्छदुग्धम्।
बालश्च तां पश्यति सा च बालं
परस्परं प्रेम न वक्तुमर्हम्।।

मातुर्हि चित्ते सततं स बालो
विस्मर्यते देहसुखं स्वकीयम्।
यदा स्थिता तं हृदये समर्प्य
श्रान्तिश्च सर्वाऽपि गता कुतश्चित्।।

यावद्धि बाले रुचिरस्ति भोक्तुं
माता सुते भोजयितुं प्रसन्ना।
क्रीडासु मग्नो यदि विस्मरेत् सा
गत्वा बलादानयति प्रयत्नात्।।

न रोदनं सोढुमसौ समर्था
माता कदाचिन्निजबालकस्य।
जलात्स्थलाद्वाप्यनलाच्च वायो
रोगाच्च तं रक्षति सर्वदैव।।

अनर्गलं वा त्रुटितं वचो ऽस्य
श्रुत्वा मुखं चुम्बति तस्य माता।
यथा स्वभक्तस्य वचो निशम्य
याति प्रमोदं भगवान् व्रजेशः।।



## किं वा दयिता किं वा विपदा

किं कथयामि सखे मम दुःखं न हि मे तुष्टा कदापि दयिता।
किंवा दयिता किं वा विपदा शिरसि विवाहादापातिता।।1।।

नेयं निजपरिवारे रक्ता नेयं तस्माद् भवति विरक्ता।
नेयं श्वश्रूननान्दृभक्ता नेयं वै निजदयितासक्ता।।2।।

सेयं दृष्टा सदैव रुष्टा क्वापि कदापि न दृष्टा तुष्टा
कञ्चिन्नेयं पश्यति हृष्टा सद्य आश्रुकपोला दृष्टा।। 3।।

दिवानिशं कलहान्न श्रान्ता क्षणाद् .......गृहकार्यात् प्रान्ता।
समाश्वासनैर्नेयं शान्ता दमपयोदैः भवति न दान्ता।।4।।

क्वचित् क्षिपति दूरात् पात्राणि क्वचित् नोदयति मृद्भाण्डानि।
क्वचित्ताडयति बालान् विरसा क्वचित् क्षिपति भगवन्तं
सरुषा।।5।।

क्वचिदुरस्ताडं सा रोदिति क्वचिच्छिरस्ताडं सा रोदिति
क्वचिच्छ्रावयत्युच्चैर्लोकान् दोषैर्मनुते दुष्टान् सर्वान्।6।।

कथयति न त्वं रोद्धुं शक्तस्त्वद्वन्नाहं विषयासक्ता
साहं भवामि भगवद्भक्ता सद्यो वो नाशयितुं सक्ता।।7।।

निजजननीगेहं यास्यामि युष्माकं बन्धं दास्यामि।
न त्वं किञ्चित कर्तुं शक्तः.....................।।8।।

मम भाग्यात्त्वं सम्प्राप्तः कयाचिदन्यया न प्राप्तः।
यत् पुराकृतं तद् भुञ्जामि निजभाग्याद् दुःखं विन्दामि।।9।।

त्वं सबलोऽस्यहमस्मि निर्बला त्वं स्थूलः खल्वहं दुर्बला।
त्वं क्रूरः पिशुनोहं सरला त्वया समा इह पतयो विरलाः।।10।।

कार्यं कर्तुं नास्मि सेविका पात्रमार्जने नो कहारिका।
नाहं विविधपाकसंधात्री बाललालने नाहं धात्री।।11।।

न हि विरसान्न भक्षणे शक्ता न च सूत्राम्बरधारणचित्ता।
नच मृद्गेहे वस्तुं सक्ता नाहं भर्तुर्भक्तौ सक्ता।।12।।

अन्या घृतप्लुतं खादन्ति कौशेयाम्बरमपि विन्दन्ति।
स्वर्णालङ्कारान् सज्जन्ति वाष्पशक्तियानैः सह यान्ति।13।।

श्वशुरो वृद्धो न प्रतिभाति कृपणो निःस्वः किं प्रददाति।
नात्रं तस्मै क्वचित् पचामि किं नान्यस्मै तच्च ददामि।।14।।

श्वश्रूर्वसतु मम दृष्टेर्दूरे वृद्धां द्रष्टुं सहे न पार्श्वे।
भगिनी तव नायातु कदाचित् न भागिनेयास्तथा कदाचित्।15।।

भगवानपि वधिरः किं कुरुते यो मद् वचो न कर्णे कुरुते।
नायं न्यायं कदापि कुरुते मद् भिन्नेषु सदा यो दयते।।16।।

नहं भारतदेशे निबला संपतियौतुकविधयः प्रबलाः।
कारावासा नगरे सघना न्यायालयेषु दण्डाः कठिनाः।।17।।



एवं नित्यं कथयति वीरा दिवानिशं स्वापेष्वति धीरा।
कार्ये प्राप्ते भवत्यधीरा निरन्तरं गृहकलहे शूरा।।18।।

किं वा दयिता किं वा विपदा शिरसि विवाहादापतिता।
किं कथयामि सखे मम दुःखे नहि मम तुष्टा कदापि दयिता।।19।।

## सुखमिव किञ्चिन्न ज्ञातम्

निखिलजीवनं सखि मे ज्ञातं
सुखमिव किञ्चिन्न ज्ञातम्।

निर्धनतायां जनिता गेहे
बाल्यादेव निर्बलता देहे
यदपि कदन्नं मिलितं भुक्तं
प्रधावितं चलितं नाधीतम्।।

चिन्तायां मिलिता जीवामि
कार्यं कृत्वा नो कथयामि
प्रज्ज्वलामि हृदये विचिनोमि
निखिलमनिश्चितमिवावयामि।।

वर्षे चतुर्दशे परिणीता
शिविकायां पतिगृहमानीता।
त्रयोऽपि दिवसा सुखान्न नीता
श्वश्र्वा परिश्रमार्थं नीता।।

वर्षा सोढा घर्मः सोढः शीतो वायुः शिशिरे सोढः।
अत्युग्राक्षुज्जठरे सोढाः परिश्रमैस्तनुपीडा सोढा।।

श्वश्र्वा क्वचिदभवं प्रताडिता क्वचिच्च वै पत्या प्रताडिता।
क्वचिच्च स्वामिन्या प्रभर्त्सिता परुषोक्त्या च गृहान्निराकृता।।



क्षुरप्रलवित्रचालनं ज्ञातं बहुशो जनप्रतर्जनं ज्ञातम्।
मृत्काष्ठशिलाभरवहनं ज्ञातं भूमिपकठिनं नयनं ज्ञातम्।।

सन्ध्या ज्ञाता प्रातर्ज्ञातं क्षितेस्तृणापसारणं ज्ञातम्।
क्षेत्रे कार्यं कर्तुं ज्ञातं सखि सुखमिव किञ्चिन्न ज्ञातम्।।

क्वचिद् गता धेनुं चारयितुं गता चापणं वस्तु क्रेतुम्।
नदीं तडागं चलिता स्नातुं कूपं प्राप्ता जलमानेतुम्।।

ढक्कानकमुरलीवाद्यानि महिलानां परिणयगीतानि।
रामकृष्णगान्धीनामानि श्रुतानि रामायणचरितानि।।

श्रावणमासे त्रीणि दिनानि गत्वा भ्रातृगृहं नीतानि।
युगानि चिन्तायां यातानि क्व च तीर्थानि क्व च दानानि।।

गृहे विनान्नं सुता रुदन्ति गाश्चारयितुं वनं प्रयान्ति।
पतिः श्रमार्थं दूरं याति नक्तं क्वापि च वस्तुं याति।।

गौमयकण्डिकां रचयामि स्वामिन्या गेहं लिम्पामि।
प्रातर्भाण्डे दधि मथ्नामि ततः क्वचित् तक्रं विन्दामि।।

जीर्णं वासो रूक्षं चान्नं जीर्णा कन्था गेहं जीर्णम्।
सर्वा सहचर्यो मे जीर्णा संप्रति कलेवरं मे जीर्णम्।।

कुटुम्बभरणे ह्यनन्यशरणे सखि सर्वं मे गतं जीवनम्।
अतिकठिनाहं विधिना रचिता तथापि चपलं गतं जीवनम्।।

उदरदरीयं दुरन्तपूरा नेमां भर्तुं भवामि शूरा।
भवामि नम्रा यद्वा क्रूरा दुरायतिर्मयि नितरां क्रूरा।।

यावद् दिनं श्रमो मे नियतो विश्रामाय न दिवसो विहितः।
श्रमं विना मे प्रियो न दयितः श्रमं विना कः सुखेन शयितः।।

केषांचित् सौख्यमयं चैतत् केषांचिद् दुःखमयं चैतत्।
केषाञ्चिद् ब्रह्ममयं चैतदस्माकं कर्ममयं चैतत्।।

निखिल जीवनं सखि मे ज्ञातं
सुखमिव किञ्चिन्न हि ज्ञातम्।।



## जयति जयति नः संस्कृतिर्भारतस्य

ज्येष्ठा श्रेष्ठा गरिष्ठा निजविशदगुणैरग्रगण्या धरिण्यां
शिष्टैर्जुष्टा विशिष्टैः सकलबुधगणैरर्चिता धर्मनिष्ठैः।
आर्यावर्तप्रतिष्ठा निरुपमविभवा सज्जनैरादरार्हा
धन्या मान्याऽनवद्या जयति जयति नः संस्कृतिर्भारतस्य।।1।।

गावो लोकान् स्ववत्सानिव मधुरपयः स्नेहतः पाययन्ति
यज्ञैर्देवान् मनुष्याः यमनियमपराः यत्र भक्त्या यजन्ति।
तृप्ता देवाः सदन्नं ददति बहुगुणं कन्दमूलादिकं च
निश्चिन्तास्तेन लोकाश्चरणसरसिजं श्रीपतेश्चिन्तयन्ति।।2।।

प्रातर्यस्यां हि बालाः स्वजनकजननीपादपद्मं नमन्ति
पित्रोराज्ञां च मूर्ध्ना भुवि कठिनतमां पालयन्त्यादरेण।
विद्यां बुद्धिं विवेकं तनुबलमधिकं तत्कृपातो लभन्ते
सेयं दिव्यातिदिव्या जयति बहुगुणा संस्कृतिर्भारतस्य।।3।।

विद्याभ्यासोत्र बाल्ये विषयसुखमथो यौवने सत्प्रजार्थं
वार्द्धक्ये वन्यवृत्या जहति निजतनूर्योगमार्गेण लोकाः।
देवर्षीणां पितृणामखिलतनुभृतां प्रीणनार्थं च पञ्च-
यज्ञा यत्र प्रवृत्ता जयति जयति सा संस्कृतिर्भारतस्य।।4।।

आदर्शो यत्र रामो निहतदशमुखः साधुरक्षातिदक्षो
योगी कृष्णश्च गीतां खलु रणविमुखायार्जुनायावभाषे।
आचारान् याज्ञवल्क्यो मनुरवनिपतिश्चोचतुर्लोकहेतोः
सम्पूर्णा सुप्रभावा जयति जयति सा संस्कृतिर्भारतस्य।।5।।

पूजार्हा यत्र नार्यः पतिहितनिरताः सद्गुणा ज्ञानवत्यः
सीतागार्गीसमानाः सुविशदचरिता ख्यातवृत्ता बभूवुः।
दुर्गालक्ष्मीसदृक्षा युधिधृतकरवालाः पवित्राः सुधन्या
सा नोऽनन्तप्रभावा जयति निरुपमा संस्कृतिर्भारतस्य।।6।।

वाल्मीकिर्यत्र विद्वान् रघुपतिचरितं निर्ममे चित्तशुद्ध्यै
वेदव्यासेन यत्र व्यरचि खलु महाभारतं श्लोकलक्षैः।
आख्यानैर्यत्रधर्माः समयमनुगता निर्णया जीवनस्य
सेयं धन्यातिमान्या जगति जयति वै संस्कृतिर्भारतस्य।।7।।

शम्भुर्योगी तपस्वी प्रपिबति गरलं लोकगुप्त्यै दयावान्
भूध्रं दध्रे नखाग्रे कुवलयमृदुलो बालकः सप्त धस्राम्।
दुष्टान् दैत्यान् निहन्तुं भवति दशभुजा यत्र दुर्गा सशस्त्रा
सेयं वीरप्रतिष्ठा जयति निरुपमा संस्कृतिर्भारतस्य।।8।।

स्तेयं सद्भिर्विनिन्द्यं दुरितमतिमहत् प्राणिहिंसासमानं
जीवा ईशेन तुल्याः सममृगपशवः पादपाश्चापि पूज्याः।
सत्याहिंसाप्रतिष्ठा जनजनहृदये राजते यत्र नित्यं
सेयं प्रोद्यत्प्रकाशा मुनिभिरभिमता संस्कृतिर्भारतस्य।।9।।

संस्कारा यत्र गर्भान्निगमसमुदिताः शैशवे यौवने च
चूडा-यज्ञोपवीतं गुरुगृहगमनं स्नानमुद्वाहनादि।
वानप्रस्थं च यस्यां भवजलधिविमुक्त्यै च सन्यासमाहुः
जीवोन्नत्यै सयत्ना जयति जयति सा संस्कृतिर्भारतस्य।।10।।

चक्रव्यूहेऽभिमन्युर्विशति रिपुदले केवलं षोडशाब्दो
निःशस्त्रःक्षीणकायोप्यहरदरिदलात् प्राज्यराज्यं स्वकीयम्।
आत्मत्यागान् महात्मा प्रविजितकरणः स्नहेमात्रेण यत्र
निर्दोषा विश्वतोषा जयति जयति सा संस्कृतिर्भारतस्य।।11।।



वाणीसंस्कारदाता त्रिभुवनविदितः पाणिनिर्यत्र धीमान्
भासो हर्षः समाघः कविकमलरविः कालिदासः सबाणः।
काव्यैः पीयूषकल्पैः सहृदयं हर्षयन्तो महान्तः
श्रृङ्गारं वर्णयन्तो समयमनुगतं धर्ममेवाभिवब्रुः।।12।।

## गतानुगतिका अधुना लोकाः

गतानुगतिका अधुना लोका निजकर्तव्यादपि विमुखाः।

पित्रोराज्ञां सुतो न मनुते स्वच्छन्दो धर्माद्विमुखः।
भार्या भर्तृकदर्थनकुशला ह्यविरलकलहा तद्विमुखा।।1।।

विघटनार्थं कृतसंगठना विद्यालयनियमाद् विमुखाः।
छात्रा अघटितानि घटयन्ति प्रायः स्वाध्याद् विमुखाः।।2।।

लब्धप्रमाणपत्रा एते दासत्वे वाञ्छा प्रमुखाः
किञ्चित् कार्यं कर्तुमशक्ता भ्रमन्ति गेहकार्यविमुखाः।।3।।

क्व च सन्ध्या क्व च देवपूजनं चेद् यज्ञाः श्रुतिविधिरहिताः।
क्व ऋचो यजूंषि सामगायनं लोकावर्णाश्रमरहिताः।।4।।

नैवाचारा न हि सत्कारा: स्वार्थव्यवहाराः प्रमुखाः।
नो सद्वचनं मधुरभाषणं गृहादतिथयो वै विमुखाः।।5।।

प्रातः काले दूरप्रेक्षा विकृता नृत्यगीतनियमाः।
कुत्सितहासो नीत्याभासो शिथिला सदाचारनियमाः।।6।।

उच्चध्वानैर्वधिराः कर्णा दृष्टिः शुचिदर्शनरहिता।
दुश्चिन्तायां मनोऽतिमलिनं मतिर्विवेकादपि विरता।।7।।

तिथेर्वर्धनं बहुधनार्जनं न्यायालयविधयः सरलाः।
वर्षे द्वादशतम आयाते विहिता विनिर्णया विरलाः।।8।।



धनव्ययाज्जनचरणस्पर्शात् संसदमाप्तः स्मेरमुखः।
लोकसम्पदा भृतनिजकोषो नेता लोकहिताद् विमुखः।।9।।

संसत्कथा बुधैर्दुर्बोधा निजपदजातिविवादयुता।
असत्यार्थे कृतबहुतर्का लोभात् सत्यश्रुतिरहिता।।10।।

जनसाङ्कर्ये मनुजोद्धारः प्रेमविवाहाः खलु प्रमुखाः।
स्तेयमद्यजनपीडनलग्नो भवति जनः स्नेहाद् विमुखः।।11।।

ईतिभीतिभिः नगरदूषणैः प्रकृतिर्जाता जनविमुखा।
प्रार्थयेऽथ दोषान् सहमानो जनार्दनो न भवेद् विमुखः।।12।।

गातानुगतिका अधुना लोका निजकर्तव्यादपि विमुखाः........

## हृदि तोषो नानीतः

नित्यनूत्नैराविष्कारैः स्वर्गो भुव्यानीतः।
तथापीर्ष्यया ज्वलति मानवो हृदि तोषो नानीतः।।1।।

अभ्रंलिहो महाप्रासादा गिरिशिखरान् विहसन्ति।
विद्युद्दीपा दिवि दीव्यन्तो रत्नानि च विहसन्ति।।2।।

महासमुद्रे महामीनवत् तरति सुखं भयहीनः।
उड्डीयते च गरुडादधिकं गगने पक्षविहीनः।।3।।

धावति भुवि योजनसहस्रकं दिवसाद् ज्ञानप्रवीणः।
किन्तु जायते शनैः स पद्भ्यां चलनस्मरणविहीनः।।4।।

धरणीगर्भसंस्थितं वस्तु पश्यत्यसौ महार्हम्।
जलधितलादानयति सोऽयं रत्नचयं च महार्हम्।।5।।

यौजनलक्षात् सुधांशुमध्याद् ग्रावचयोप्यानीतः।
अग्रे चापि जिगमिषुर्लोकान् हृदि तोषो नानीतः।।6।।

नित्यनूत्नैराविष्कारैः...........।

जननीजनकसाधुगुरुवचनं कर्णे कुरुते नायम्।
प्रचुरं ललितं लिखति विरचयति कल्पितकथास्तथायम्।।7।।

आर्थिकभौतिकनैतिकविषये ग्रन्थान् रचयति महतः।
सोऽन्तर्दाहस्तथापीर्ष्यया मनसि वर्धतेऽतुलितः।।8।।



छिद्यन्तेऽनुदिनं विपिनानि सविषाः सरितो विहिताः।
भुवने वहति विषाक्तः पवनः प्राणान् हर्तुं पुरतः।।9।।

ब्रह्माण्डाम्भो द्रुतं विशुष्यति शुष्का भवन्ति सरितः।
नीरवर्षणादधिकाद्यद्वा वसुधा भवति विचलिता।।10।।

शोषयन्ति शोणितवेताला नरतनुशोणितमनिशम्।
श्रावणमासे वारिवर्षणं वर्षति रक्तमभीक्ष्णम्।।11।।

नित्यनूत्नैराविष्कारैः................

दुर्भरशस्त्रभरैरवनम्रा क्रोशति धरणी दीना।
लोकानामभिरामाः प्राणाः कम्पन्ते धृतिहीनाः।।12।।

पीड्यन्ते ललना अथ बाला लोभान्नानोपायैः।
गोमृगविहगमीनदुःखानि गणयेत् कः सदुपायैः।।13।।

रोदित्यधोमुखी हृतवसना निजभवने मानवता।
तामपि कर्षति मनुजो धरणौ पराजिता दानवता।।14।।

उत्साहात् परिणयघटदीपा शतशो निजकरविधृता।
कुकृत्यपवनात् तान् निर्वापयति स्वकराद् भाग्यविरहितः।।15।।

नित्यनूत्नैराविष्कारैः स्वर्गो भुव्यानीतः
तं ध्वंसयितुं स्वयं च यतते हृदि तोषो नानीतः।।16।।

## मनुष्यं च धिगीदृशम्

द्रौपद्या बलिनो हि पञ्चतनयान् द्रोणात्मजो भारते
सुप्तानेव निहत्य रात्रिसमये निन्दामवापातुलाम्।
यत्पापं स च मार्जितुं न हि युगैर्घोरं समर्थोऽभवत्।
सृष्टेर्जीवगणान् विनाश्य युगपत् सभ्या इमे ज्ञानिनः।।1।।

एको भूमिपतिः श्रुतः क्षितितले मूर्खश्च गत्वा गिरिं
ज्वालाप्रज्वलितान् विधाय नगरान् योऽवादयद्दुन्दुभिम्।
एतेषां समतां तथाप्यकुशलः कुर्यादसभ्यः कथं
सभ्यानां मतिशालिनामणुमान् कुर्वन्ति ये नित्यशः।।2।।

निर्माणे किल शक्तिरस्ति भवतामेकस्य मर्त्यस्य चे
मज्ञानामथवा विवेकरहितानां वा तिरश्चां पुनः।
वृक्षस्यैव पुनर्जडस्य सलिलं बीजं विना मृत्तिका-
मेषाप्राणहरक्रिया तनुभृतां क्षम्या कथञ्चिद् भवेत्।।3।।

एकस्यापि वधाच्च राजनियमैर्यत्प्राणदण्डो धृतो
लक्षाणां च वधेऽत्र राष्ट्रनियमो राष्ट्रैर्न किं निश्चितम्।
यद्येवं क्रियते न चेत् सुमिलितैर्विज्ञानिभिः सर्वशः
मानुष्यं च धिगीदृशं यदि भवेत् तिर्यक्त्वमस्माद् वरम्।।4।।



## कालनामा महेशः

सर्पो भूत्वा स कांश्चिद् दशति हि विटपात् पातयित्वा तथान्यान्
प्रासादाद्वा कदाचित् क्षिपति च सलिले मज्जयत्यर्णवेऽन्यान्।
व्याघ्रो नक्रोऽथ कांश्चिन्निगलाति नितरां हस्तिभूतश्च कांश्चित्
शुण्डेनाहत्य लोके विचरति भगवान् कालनामा महेशः।।1।।

दावाग्नौ वा बलिष्ठः प्रदहति युगपत् प्राणिनां यः सहस्र-
मास्कन्दे चास्त्रशस्त्रैरणुकणजनितैर्नाशयन् लक्षशोऽन्यान्।
नद्याः पूरे भ्रमौ वा दिनमणितपने भर्जयन् कांश्चिदन्यान्
जीवान् नानाविलासैर्विहरति भुवने कालनामा महेशः।।2।।

कांश्चिद्धालाहलेन ज्वलयति विषमं पीडयन् प्राणिजातं
नानारोगैर्ज्वरैर्वा जरयति निबलान् राजयक्ष्मासहक्षैः।
कीटैः प्रेतैः पिशाचैः कलयति कतिचिन्मानवान् दुग्रहैश्च
नाना यानैः स्वतन्त्रो विचरति भुवने सर्वभुक् कालनामा।।3।।

विज्ञातार्थोऽपि लोके यदि भवति जनः पापकर्मानुरक्तः
कामैः क्रोधैः प्रलोभैरपहृतकरणो ज्ञानहीनो दुरात्मा।
आश्चर्यं नैव किञ्चिद् विलसति निखिले सर्वतस्तस्य माया
किं कुर्यात् कर्मबद्धः पशुपतिकृपया संतरेत् कोऽपि धन्यः।।4।।

## संस्कृतभाषा रमणीया

संस्कृतभाषा रमणीया कदापि न हि विस्मरणीया
संततमियमादरणीया लोकैर्मनसा पठनीया।।
सेयं नितरां रमणीया

सर्वासां भाषाणां जननी संस्काराणामेषा जननी।
वेदानामप्याविष्करिणी मनोज्ञकाव्यानां निर्झरिणी
अस्या गुणा अकथनीया, सेयं .........
साधुजनानामेषाजननी सच्छास्त्राणामेषा जननी
इतिहासकथानामेषा जननी दर्शनशास्त्राणामपि जननी।

विविधकवीनामेषा जननी ख्यातानां वीराणां जननी।
विष्णोरवताराणां जननी व्युत्पन्नानां विदुषां जननी।।

कमलकोशमिव किल सौन्दर्ये शिरीषपुष्पमिव सौकुमार्ये।
द्राक्षारस इव या माधुर्ये कोमल किरणो मणिरिव दाढ्र्ये।।
सेयं सततं पठनीया...........

सन्त्यस्यामुपनिषदः पुण्या आत्मबोधपरिपूर्णा धन्याः।
वितरन्ति जने याः शुद्धं ज्ञानं नाशयन्ति या हृदयाज्ञानम्।।

इयमासीद् देवानां भाषा बभूव सभ्यजनानां भाषा।
स्मृतिपुराणवेदानां भाषा काव्यशास्त्रविद्वज्जनभाषा।
सेयं नितरां रमणीया ...............



ज्योतिर्गणितानामपि भाषा
नाट्यकाव्यसामुद्रिकभाषा।
छन्दःशास्त्रचिकित्साभाषा
कलाशिल्पनीतीनां भाषा।।
सेयं सततं पठनीया.......................

संस्कृत भाषा रमणीया
कदापि न हि विस्मरणीया।
संततमियमादरणीया
लोकैर्मनसा पठनीया।।

# पठ संस्कृतम्

पठ संस्कृतं वद संस्कृतं शृणु संस्कृतं लिख संस्कृतम्
अतिमञ्जुलं श्रुतिमङ्गलं जनरञ्जनं सुखवर्धनम्।।

निखिलं धनं किल संस्कृते मम पूर्वपूरुषसञ्चितम्।
निहितं च खलु तद् रक्षतात् तव वै भविष्यति सौख्यदम्।।

सततं त्वलङ्कृतिमण्डितं नवभी रसैः परितोषणम्।
ध्वानिझङ्कृतं गुणसम्पदं मृदुभिः पदैः परिकूजितम्।।

अतिपावनं चरितं हरेर्निजजीवने परमौषधम्।
अभयप्रदं सुमनोहरं पठ संस्कृते भवमोक्षदम्।।

चरितं सतामथ भूभृतां पठ पावनं लिखितं परम्।
विविधाः कथाः सुमनोहरा लिखिता बुधैः पठतात् सुखम्।।

पठ वीरचरितं पावनं पठतात् सतीचरितं तथा।
पठ चारु चरितं दानिनां पठ दिव्यचरितं योगिनाम्।।

निजमानसं कुरु पावनं कुरु चात्मचरितं पावनम्।
कुरु देशचरितं पावनं कुरु विश्वचरितं पावनम्।।

श्रुतिसम्मतं स्मृतिसम्मतं सुरसाधुसज्जनसम्मतम्।
विधिसम्मतं नयसम्मतं स्वगुणैर्नृणामुपकारकम्।।



विबुधा वदन्ति हि संस्कृतं कविभिः सुखादुररीकृतम्।
अधुना जनैरुररीकृतं पृथिवीषु दीव्यति संस्कृतम्।।

अतिमञ्जुलं श्रुतिमङ्गलं जनरञ्जनं सुखवर्धनम्।
पठ संस्कृतं वद संस्कृतं शृणु संस्कृतं लिख संस्कृतम्।।

## जातं तवान्तःकरणं दृषद्दृढम्

जातं तवान्तःकरणं दृषद्दृढं
न वेपते दीनजनं विलोक्य यत्।
रोमाञ्चितं नैव कलेवरं क्वचिन्
न चक्षुषोरश्रुकला च दृश्यते।।

न धर्मनिष्ठा हृदये श्रिता क्वचित्
न चेश्वरादेव विभेषि मानव।
न लोकलज्जाभयमेव बाधते
न शास्त्रचिन्ता च हितावहा तव।।

निजौ च मातापितरौ न मन्यसे
न मन्यसे त्वं स्वगुरून् विपश्चितः।
महात्मनस्त्यागपरायणानथो
दृष्ट्वा परं भ्राम्यसि चाकचक्यम्।।

त्वं व्याधवद्ध्वंसि जनान् खगानिव
न्यायं च मात्स्यं श्रयसे दिवानिशम्।
दीर्घोदरो जीवसि भक्षितेतरः
त्वं हंस्यनेकानपि पूरितोदरः।।

स्वश्रेयसे त्वं धनमेव मन्यसे
मान्यो जनो हन्त तिरस्कृतस्त्वया।
तोषो न चैवं भविता कदाचन
दिवं प्रयातेऽपि न तेऽस्ति सद्गतिः ।।



## पं. श्रीगोविन्दप्रसादसिलाकारीसंस्मरणम्

कायेनातिलघुः कृशः प्रभावबहुलो लोकप्रियः कान्तिमान्
चन्द्रज्योतिरिव स्फुरन् सुमधुरं मन्दं हसन् मानदः।
विद्यादानपरायणः सुमतिमान् विद्याव्रतः श्रीयुतो
गोविन्दो जयतेतरां खलु सिलाकारी द्विवेदी सुधीः।।

छात्राणां च कृते ययाच धरणीं गेहं नवान्नं धनं
ग्रीष्मे प्रावृषि यत्नतश्च शिशिरे शक्तेः पदं यत्नतः।।
विद्यादानफलं जनांश्च कथयन् विद्यां ददानः स्वयं
गोविन्दो जयतेतरां स च सिलाकारी द्विवेदी सुधीः।।

प्रान्तेऽस्मिन्नगरेऽथवा रसवती वाणी श्रुता संस्कृता
ये यज्ञाः श्रतुयः श्रुता अथ कथाः पौराणिकानां तथा।
तत्सर्वं कठिनेन यस्य तपसा जातं परं श्रीयुतो
गोविन्दो जयतेतरां हि सिलाकारी मनीषी महान्।।

नो देहं न निजं धनं न च गृहं योऽजीगणज्जीवने
धर्मे चाश्रमनिर्मितौ श्रमपरो रुग्णोऽपतद् विष्टरे।
निःस्वो नौषधिसेवने प्रभुरभूत् तस्माच्च नाकातिथिः
गोविन्दो यशसाऽत्र जीवति सिलाकारी महानात्मवान्।।

संकल्पात् खलु वर्धतेऽस्य नितरां विद्यालयो नित्यशः
छात्राणां च शतं पठन्ति सततं वेदांश्च शास्त्राणि च।
अत्राधीत्य च यान्ति दिक्षु परितो विद्यां प्रदातुं जने
गोविन्दो जयतेतरां स हि सिलाकारी द्विवेदी सुधीः।।

यातोऽसि देवतुल्यस्त्वं वयं च नतमस्तकाः।
विद्यालयविवृद्ध्यर्थं कार्यं कुर्मस्तवाशिषा।।

## श्रीमन्तो राधेलालशास्त्रिणः

आसीद् विद्वान् सागरे सिन्धुतुल्य कासारस्योत्तरस्यां दिशायाम्।
नन्दीलालः श्रीसिलाकार्युपाह्वः शुद्धाचारो भार्गवाम्भोजभानुः।।

सत्यव्रतः सदाचारी नित्यस्वाध्यायतत्परः ।
वेदव्यास इव ख्यातः पुराणानां निरूपणे।।

तेजस्विनो दिव्यगुणान्वितस्य विद्याधनस्यास्य धनान्वितस्य।
गृहस्थधर्मानुरतस्य चैव कालो व्यतीयाय सुखेन भूरि।।

लेभेऽथ सूनुं जवाहरस्य श्रीनेहरोर्जन्मदिने पवित्रे।
ख्रीष्टे नवाष्टाष्टशशाङ्कवर्षे नवम्बरे मासि चतुर्दशेऽह्नि।।

पित्रोर्नवेन्दोरिव जन्मना शिशोः समुल्ललासाद्य मनोमहार्णवः।
ममौन मोदो हृदये कुटुम्बिनां व्याप्तः सवाद्यैः सहदिक्षु चाम्बरे।।

अम्बायाः श्रीराधिकायाः प्रसादाद् राधेलालः सोऽभवत् तत्र नाम्ना।
मातापित्रोः प्रीतिरस्मिन् प्रकृत्या सौम्ये बाले प्रत्यहं वर्धते स्म।।

मनोज्ञरूपः शुभलक्षणः शिशुर्दिव्येक्षणैः स्वैश्च मनोहरस्मितैः।
पितुर्गृहे संववृधे दिने दिने स शुक्लपक्षेषु शशीव नन्दयन्।।

तदाननं पङ्कजकोशकोमलं चेतो विशुद्धं नवनीतकोमलम्।
तद्देहकान्तिर्विमला मनोहरा बाल्येऽपि तस्याचरणं सुखावहम्।।



वर्षेऽष्टमेऽसौ सुविशालनेत्रो मन्दस्मितैः शोभितचारुवक्त्रः।
सुस्वच्छवासाः कृतदिव्यवेषः कृतोपवीती शुशुभे स बालः।।

तेजोनिधिस्तत्र बभूव विद्वान् भस्मस्त्रिपुण्डोच्छुरितोत्तमाङ्गः।
रुद्राभिषेकाप्तशिवप्रसादो जितेन्द्रियो नैष्ठिकब्रह्मचारी।।

साक्षान्महादेव इवाद्वितीयो नाम्ना महादेव इति प्रसिद्धः।
वेदस्य सर्वस्वरमर्मविज्ञः सदा तदभ्यासरतो महात्मा।।

तज्ज्ञानमाप्तुं च तदाविशेषात्तं प्रार्थयन्ति स्म बुधा इदानीम्।
अध्यापयद् वेदविदां वरिष्ठश्छात्राननेकान् सरलस्वभावः।।

तथाविधस्यास्य तपस्विनोऽन्तिकं तमानयामास पदाब्जयोः पिता।
उत्साहपूर्वं दशहायनं सतं जग्राह वेदाध्ययनाय बालकम्।।

नवव्यवस्थासु मनोनियोगात् सदा नवोत्साहसमन्वितोऽसौ।
उषःसु नित्यं कृतनित्यकृत्यस्त्रिकालसन्ध्यानिरतो मनस्वी।।

भेदैर्विभेदैर्विविधैः समस्तोदात्तानुदात्तस्वरितस्वराणाम्।
शुक्लस्य शाखां यजुषः पवित्रां माध्यन्दिनीं यत्नपरोऽध्यगीष्ट।।

काले तदा ब्राह्मणबालकानां कल्याणकामाः सुविवेकवन्तः।
संस्कारदां संस्कृतपाठशालां प्रवर्तयन्ति स्म निजप्रयत्नात्।।

कल्याणदत्तः किल शब्दशास्त्री श्रीकेशवः ख्याततमंश्च शास्त्री।
श्रीरामशास्त्री च महामनस्वी ह्यध्यापयन्ति स्म तदा विशेषात्।।

अधीतवान् व्याकरणं स शास्त्रं व्यवस्थितं केशवशास्त्रिपार्श्वे।
जग्राह काव्यादिकमाशु चास्मात् सुतीक्ष्णबुद्धिः स्वमनोनियोगात्।।

अत्राययौ दर्शनशास्त्रमर्मवेत्ता कविः पण्डितवृन्दमान्यः।
अशेषशास्त्रार्थकलाप्रवीणो लोके प्रसिद्धः खलु लोकनाथः।।

निशम्य विद्याव्यसनी विवेकी जगाम सद्यो विदुषः समीपम्।
कुशाग्रबुद्धिं प्रविलोक्य चैनं जग्राह बालं विनयावनम्रम्।।

स साधनायामनिशं निविष्ट एकाग्रचित्तः सततं श्रमेण।
प्रत्यग्रहीद् दर्शनशास्त्रमर्म गुरोः सकाशादचिरं यशस्वी।।

यथा परीक्षासु तथा सभासु स्थानं स लेभे प्रथमं मनस्वी।
स्वदेहकान्त्या प्रतिभाविशेषाद् विद्याविवेकाच्च समृद्धिशाली।।

मध्यप्रदेशे प्रथितप्रभावो यशो विशुद्धं विततान दिक्षु।
वेदे पुराणेष्वथ दर्शनेषु शास्त्रेषु चान्येषु विशेषविज्ञः।।

अध्यापयामास स वेदमेव वेदस्य रक्षार्थमसौ विशेषात्।
वेदध्वनिः कर्णगतः प्रदेशे यत्रैव मन्ये स च तत्प्रसादात्।।

वेदध्वनिं कुर्वति हन्त तस्मिन् शान्ता अशृण्वन्नपि वेदविज्ञाः।
पञ्चानने गर्जति कोऽत्र जन्तुर्वने समर्थः प्रतिगर्जने स्यात्।।

स्वाध्यायविद्यार्जनदत्तचितो विद्वान् यथासीत् किल विष्णुभक्तः।
आसीत्तथोत्साहयुतस्तथासौ वाक्कायचित्तैर्निजदेशभक्तः।।



समादिदेशैकगुणाङ्कसूर्यख्रीष्टाब्द एवं निजदेशभक्तान्।
स नेतृभिः संमिलनाय शीघ्रं स्वतन्त्रतासंगरदीर्घयज्ञे।।

विद्यालयस्योन्नतये महामनाः प्रायः शुभे मन्त्रिपदे स्थितः सदा।
स्वजीवनस्यान्तिमवासरे च स सस्मार संस्थां निजजीवनाधिकाम्।।

गुणाष्टाङ्कसहस्त्राशुसंख्याके ख्रीष्टवत्सरे।
दिनाङ्के चाष्टमे मासि पञ्चमे स दिवं ययौ।।

दिवं गतो यद्यपि पाञ्चभौतिकीं तत्याज भूमौ अतिपुण्यवान् तनुम्।
तथाप्यसौ जीवति चान्तरात्मना लोकेषु नृणां प्रतिमानसं सुधीः।।

तत्तनयेषु च नीतिज्ञो वक्ता विद्वत्सभास्वपि।
लक्ष्मीनारायणश्चासीच्चिकित्साशास्त्रपण्डितः।।

पुर्याः परिषदध्यक्षो यो बभूव गुणान्वितः।
ब्रह्मचर्याश्रमाध्यक्ष सेवायां निरतोऽभवत्।।

यः षष्टिवर्षदेशीयो दिवं यातो जनप्रियः।
कृष्णकान्तः सिलाकारी अधिवक्ता प्रियंवदः।।

शालाध्यक्षपदे तिष्ठन् संस्थासेवापरोऽधुना।
मनसा कर्मणा वाचा संलग्नोऽस्ति निरन्तरम्।।

संस्था समुन्नतिं याति यत्प्रयत्नाद्दिने दिने।
छात्राः भवन्ति विद्वांसो यशः तन्वन्ति दिक्ष्वपि।।

## साधवः

स्वयं वर्षाकाले वहति पवनो वर्षति घनो
नभोभागे विद्युद् विलसति च नृत्यन्ति शिखिनः।
हरौ दृष्टे तस्मिन् कमलनयने साधुपुरुषा
हसन्तो नृत्यन्तो सलिलमिव वर्षन्ति नयनैः।।

## कामक्रोधौ

पर्वताविव दुर्धर्षौ कामक्रोधौ स्थितौ पथि।
धीरः पारं प्रयत्नेन याति भीरुर्निवर्तते।।

## पतङ्गः

विलोक्य प्रकाशं न भूयः कदाचित्
प्रयात्यन्धकारे यदा चेत् पतङ्गः।
तदा कृष्णरूपं सुदिव्यं विलोक्य
जगत्यन्धकारे पतेत् किं सुविज्ञः।।



## स्तुतिः

चौर्याद्धैयङ्गवीनं किसलयरुचिरे पाणिमध्ये दधानं।
धावन्तं भीतभीतं चकितमिव पुनर्द्वारतो मध्यमार्गे।।

बालं कञ्चिद् विलोक्य नवजलदरुचिं फुल्लराजीवनेत्रं।
वन्दे कृष्णं यशोदासुतमतिचपलं चारुदन्तं प्रसन्नम्।।

गौराङ्गी सा राधिका चन्द्रिकेव नीलाकाशश्यामलाङ्गः स कृष्णः।
राजेतां वाऽन्योन्यरूपेण नित्यं स्वीकुर्यातां मे हृदब्जे निवासम्।।

धृतनरवरवेषो गोपगोपीसमेतो
वनकिसलयगुच्छैः पुष्पहारैर्मनोज्ञः।
कटितटकृतविद्युत् पीतवस्त्रः किरीटी
नवजलधरनीलः पातु बालःस कोऽपि।।

## उदयति सूर्यः

उदयति सूर्यः किरणसहस्रैः
खगगणरावः प्रसरति लोके।
कमलसमूहो हसति समोदं
मधुपगणो निःसरति च बन्धात्।।

पवनविलासः सुखयति सर्वान्
कुसुमसुगन्धं वितरति हर्षात्।

मुनिजनसंघो हरिगुणमग्नः
बटुसमुदायः पठति च वेदान्।
विहरति बालः प्रकृतिमनोज्ञः
स्मितमृदुहासः सुखयति लोकम्।।

## भ्रमति गतिमन्तं च मनुते

वृषो यन्त्राबद्धः प्रचलति यथा तत्परतया
परं त्वज्ञः स्थान्न हि चलति तस्माद् दरमपि।
तथा कार्यासक्तः पुरुष इह सान्द्रेऽतिनिविडे
ह्यभद्रे संसारे भ्रमति सुगतिं स्वं च मनुते।।

## महादेवः कालः

महादेवः कालः प्रविचरति काल्या स भगवान्
दिवारात्र्यक्षैः क्रीडति न विजितोऽद्यापि कुशलः।
असंख्येयाः क्रीडारचितशिशुकामा असुभृतो
म्रियन्ते जायन्ते प्रतिपलमहो क्रीडनमिदम् ।।

## स मानवः किम्

ज्ञानं सविज्ञानमवाप्य कीर्तिं
यशश्च गर्वं कुरुषे कथं रे।
दानं दया चित्तपवित्रता च
न सन्ति यस्यात्र स मानवः किम्।।



## प्रकृतिसौन्दर्यम्

सर्वत्रोषसि दृश्यते सुरुचिरं दृश्यं च खे यादृशं
यत्कर्तुं प्रभवन्ति नैव निपुणा विज्ञाः कलावेदिनः।
वध्वो मण्डनमण्डिता सुवसना माङ्गल्यशोभान्विता
मन्ये कुङ्कुममाकिरन्ति महतां पूजार्थमग्रेसराः।।

नृत्यन्तो विहगा सुखं कलरवं कुर्वन्ति वृक्षे स्थिता
मन्ये ते जयमावदन्ति सवितुर्ज्योतिष्मतः स्वागमे।
शाखाभ्यश्च लताः किरन्ति कुसुमान्यच्छानि मार्गे प्रभो-
र्मेघेनापि च सेचितं भगवतो यात्रार्थमच्छं जलम्।।

## नौका

नौकादण्डेन हीना जलनिधिपतिता वीचिमालासु नौश्चेत्
प्राचीं गच्छेत्प्रतीचीमथ तु दिशमुदीचीमवाचीमुतान्याम्।
नीरे मज्जेत् कदासाविति न हि विदितं कस्यचिद्वा गभीरे
ह्येवं चिन्त्या गतिः स्याद् विधिविहतमतेर्लक्ष्यहीनस्य पुंसः।।

## श्रद्धासरित् ''गङ्गा''

प्रक्षालयन्ती चरणौ मुरारेः
श्रद्धासरित्सा हृदये मदीये।
पीयूषकल्पाऽखिलकल्मषाणि
प्रशामयन्ती प्रवहेदजस्रम्।।

## समुद्रः

यद्यप्यपारो जलधिर्जलेन
दिक्षु प्रपूर्णोऽस्ति मनोहरश्च।
खगा मृगा वा मनुजा न पातुं
शक्ता जलं सोऽप्यथ मार्गबाधा।।

## कुटुम्बी

कुटुम्बमात्रं भरते कुटुम्बी
सुतं कलत्रं सुहृदं स्वबन्धुम्।
नान्यस्य तत्रास्ति गतिर्न तृप्तिः
तृप्ता यथाब्धौ जलजा हि जीवाः।।

## मैवं हि गर्वं कुरु तुच्छतैषा

अहं बहुज्ञोऽस्मि बहुश्रुतोऽस्मि
मैवं हि गर्वं कुरु तुच्छतैषा।
ज्ञातुं समर्थोऽसि न पुष्पमेकं
ब्रह्माण्डवार्ता तु विलक्षणैव।।



## अभिनन्दनम्

दिवि भुवि च विशुभ्रै रश्मिभिर्भ्राजमान-
स्तरणिरिव निशाया ध्वान्तराशिं विनाश्य।
जननयनसरोजानां वितन्वन् विकास-
मयमटलविहारी राजते वाजपेयी।।1।।

द्रवति खलु जनानां वीक्ष्य दुःखानि नित्य-
मभिलषति विधातुं सौख्यपूर्णान् जनान् यः।
प्रथित इह तपोभिः सेवया कर्मभिर्यो
लसति भरतभूमौ सोद्य मन्त्रीप्रधानः।।2।।

उदधिरिव गभीरो दुर्जनैर्दुष्प्रवेश्यो
गगनमिव विशुद्धः साधुवृत्तो मनस्वी।
धरणिरिव च धैर्ये सत्यसन्धो दयालु
रिह भवतु शतायुर्लोकसन्तुष्टिकामः।।3।।

भुवि खलु सुजनानामद्य वाञ्छा प्रपूर्णा
सकलखलजनानामद्य नीतिः प्रणष्टा।
विशुचिचरितवन्तः साधवः संचरन्तु
विमलतमसुखानां सिन्धवः संवहन्तु।।4।।

मनसा तथा वचनैः प्रियैर्हृदयेन तेस्त्वभिनन्दनं
जन हृत्स्थलेषुविहारिणो नृहितैषिणोस्त्वमभिनन्दनम्।।
प्रमुखस्य भारतमन्त्रिणो ह्यटलस्य चास्त्वभिनन्दन-
मभिनन्दनं शतशो जगत्सुहृदःकरोम्यभिनन्दनम्।।5।।

# प्रणवाभिनन्दनम्*

सुदिव्यतेजःपूर्णो विशालभालः सुशान्तदृक् सौम्यः।
सात्विकसद्‌गुणसिन्धुः प्रकृत्या तु बाल इव सरलः।।1।।

सततं सुस्मितवदनो मेधावान् पीयूषमृदुवचनः।
विद्यातपः प्रभावात् स्ववशीकृतसर्वबुधनिकरः।।2।।

नेच्छति निजस्य मानं यच्छति मानं सदैव विद्वद्भ्यः।
ददाति विद्यादानं योग्येभ्यश्छात्रवृन्देभ्यः।।3।।

भूतं भवद् भविष्यद् यच्च कालत्रयपरिच्छेद्यम्।
कालत्रयात् परं यत् प्रणव एव राजते सर्वम्।।4।।

सर्वस्यादौ मध्ये प्रणव एव वर्तते तथा चान्ते।
एवं प्रणवं जानन् मुक्तः शेते सुखं मनुजः।।5।।

प्रणवं विद्यादीशं सर्वव्यापिनं सर्व हृदि संस्थम्।
प्रणवो मत ओंकार ओंकारः खलु परं ब्रह्म।।6।।

प्रणवं ध्यायति हृदये पश्यति सर्वं प्रणवमयं लोकम्।
जातः प्रणवमयोऽयं तस्माल्लोके प्रणव इति ख्यातः।।7।।

विद्वाँल्लिखति यथेच्छमिच्छारामो विविधेषु विषयेषु।
हितावहं साहित्यं हिन्द्यां वा संस्कृते वापि।।8।।

*05-06-2005 ई. दिनाङ्के विरचितम् आचार्य इच्छारामद्विवेदिनः अभिनन्दनग्रन्थे प्रकाशितम्।



लेखा यस्य गभीरा धाराबद्धाः सार्थका मधुराः।
सत्साहित्यसमृद्ध्यै प्रेरकाः स्वस्थलेखार्थम्।।9।।

मधुमधुरं यत्काव्यं सहृदयहृद्यं प्रसादगुणयुक्तम्।
रमयति चेतो विदुषां हर्षयति च काव्यमर्मज्ञान्।।10।।

नायं वाञ्छति लिखितं दोषैर्दुष्टं घृणास्पदं व्यर्थम्।
साहित्यं हि विषयिणां यत् स्यात् क्षणमात्रतोषाय।।11।।

नाट्यशात्रमर्मज्ञः सजीवमिव चित्रयति नाट्यम्।
मृदुभावैः संपुष्टं सोद्देश्यं नीति संजुष्टम्।।12।।

विधृतसमुज्ज्वलवसनो राजति पृथगिव विशेषसंगोष्ठ्याम्।
सभा भवत्याकृष्टा व्याहरति यदि वर्षति सुमानीव।।13।।

श्रीमद्‌भगवद्‌भक्तो वर्षति भागवतामृतं यर्हि।
हृदि लब्ध्वा श्रीकृष्णं लोकाःप्रेमाश्रु वर्षन्ति।।14।।

विमलं करोति हृदयं नाशयति संचितमज्ञानतमःपुञ्जम्।
ददाति विमलं ज्ञानं द्वाराण्युद्‌घाटयति प्रकाशार्थम्।।15।।

लालबहादुरविद्यापीठे जवाहरविश्वविद्यालस्यान्तः।
अधुनाध्यक्ष्यं कुरुते पुराणेतिहाससंभागे।।16।।

अनेन विहिता रचनाः प्रणवकृता एव विश्वविख्याताः।
नवा नवाः किल भावां यासु बहवः प्रकाश्यन्ते।।17।।

अस्य स्नेह विशेषात् यत्साहित्यं प्रकाश्यते विज्ञैः।
प्रणवप्रभेतिनाम्ना भविष्यत्यालोकदं नृभ्यः।।18।।

जाग्रति या या इच्छा अस्य तु मानसि सज्ज्ञानवृद्ध्यर्थम्।
पूर्णा भवन्तु तास्ता इत्यहं संप्रार्थये श्रीशम्।।19।।

अभिनन्दनं क्रियतेऽधुना मिलितैर्बुधैस्तव सादरम्।
अभिनन्दनं क्रियते मया प्रणवस्य ते सुहृदः सतः।।20।।

अभिनन्दनं तव शिष्यकैः प्रणतैः पदे क्रियते मुदा।
अभिनन्दनं हृदयोत्सवाय च मङ्गलाय च जायते।।21।।



# वार्द्धक्यम्*

पादौ जातौ सकम्पौ पथि चलति पतन् दण्डपाणिर्नतोऽधो।
दृष्टिर्जाताऽतिमन्दा न हि निकटतमं प्रेक्षितुं वस्तु शक्तः।
ईशः श्रोतुं न शब्दं वदति परिजनं कोस्त्यसौ किं ब्रवीति
स्पष्टं ब्रूते न वाक्यं प्रविकृतवदनो हन्त दन्तैर्विहीनः।।1।।

श्वासैः कासैरशक्तः श्वसिति बहुतरं कम्पते चाङ्गयष्टिः
पानीयं पातुमिच्छन् भवति परवशः कोऽपि दत्ते श्रुतं चेत्।
भुङ्क्ते प्राप्तं यदन्नं तदपि न समये क्षुत्परीतो निराशे
लोकान् पश्यत्यनीशो मनसि च कुरुते पूर्ववृत्तं स्वकीयम्।।2।।

पुत्रा गच्छति दूरादथ निजसुहृदो भ्रातरो बान्धवाश्च
पृष्टो ब्रूते न कश्चित् सपदि स हि निजे गेहकार्ये प्रसक्तः।
ज्ञातुं विश्वस्य वार्ता तदनु च यतते विष्टरे स्वे शयानः
श्रोतुं यद्यप्यकल्पस्तदपि हतभगः प्रष्टुकामः सदैव।।3।।

पत्नीगेहात्मजानां स्मरति च सततं प्रोन्नतिं वा क्षतिं वा
चित्ते नैवास्ति शान्तिः परिजनविषये सर्वदास्ते सचिन्तः।
नात्मानं प्रेक्षतेऽसौ न च भजति हरिं मौहसिन्धौ निमग्नो
नेष्यत्येनं हि मृत्युश्छगलकसदृशं भूरि मे मे ब्रूवाणम्।।4।।

बाल्यं क्रीडासु यातं सह युवतिजनैर्यौवनं संप्रयातं
वार्द्धक्यं त्वागतं ते न भवसि किमु रे सावधानोऽधुनापि।
सार्धं यास्यन्ति नान्ते सुतगृहवनिताद्याः कदाचित्तवैते
तस्मात् सेवस्य रामं तव सततमभूज्जीवने यः सहायः।।5।।

* 28-05-2005 ई. दिनाङ्के विरचितम्।

## तस्मादिहैक्यं खलु भारतेऽस्मिन्

प्रान्तेष्वनेकेषु विभिन्न वर्णा
लोका विभिन्ना व्यवहारतश्च।।
दृष्ट्या स्वभावेन च भिन्नरूपा-
स्तथापि चैक्यं ननु भारतेऽस्मिन्।।1।।

अङ्गेषु वङ्गेषु तथा कलिङ्गे
कर्णाटके गुर्जर उत्कले च।
भाषा अनेकाः खलु भारतेऽस्मिन्
तथापि चैक्यं परिदृश्यतेऽत्र।।2।।

शैलो महेन्द्रो मलयः ससह्यो
विन्ध्यादयः सन्ति नगाश्च यत्र।
गङ्गा च गोदा च सरस्वती च
कावेरिकाद्याः प्रवहन्ति भिन्ना।।3।।

केदारनाथो मथुरा प्रयागो
रामेश्वरो द्वारवन्ती ह्यवन्ती।
विभिन्नतीर्थानि विभिन्न भागे-
ष्वथापि चैक्यं खलु भारतेऽस्मिन्।।4।।

व्यासो वशिष्ठः कपिलः कणादो
धौम्यो भृगुर्वै च्यवनः पुलस्त्यः।
जाता अनेके मुनयोऽत्र भिन्ना-
स्तथापि चैक्यं मम भारतेऽस्मिन्।।5।।



रामश्च कृष्णश्च नृसिंहदेवो
गजाननः पंचमुखो महेशः।
दुर्गा हनूमानथ कार्तिकेयो
देवेषु चैक्यं खलु भारतेऽस्मिन्।।6।।

एको हि देवोऽत्र विभिन्न रूपः
स्थितोऽत्र सर्वेषु च मन्दिरेषु।
न वैमनस्यं हृदये स्थितं वै
तस्मादिहैक्यं किल भारतेऽस्मिन्।।7।।

बुद्धो जिनेन्द्रोऽप्यथवेशदूता
ईशोऽथवाऽम्बा जगदीश्वरो वा।
अल्ला जिहोवाऽप्यभवाऽन्यदेवः
स एव देवः परिदृश्यतेऽत्र।।8।।

अतो मनुष्याः श्रृणुतेदमत्र
द्वेषो न रागो नहि मत्सरो वा।
कोटिल्यभावो नहि भेद-भावो
योग्यः कदाचित् खलु भारतेऽस्मिन्।।9।।

सर्वे मिलित्वाऽत्र वसन्तु देशे
राष्ट्रोन्नतावेव सदा यतन्ताम्।
स्थिता विभिन्नेषु दलेषु भिन्ना-
स्तथापि चैक्यं कुरुतात्र नित्यम्।।10।।

एको हि धर्मः खलु मानवीयो
सत्यं दया स्वेन्द्रियनिग्रहश्च।
जानन्ति सर्वे वसुधां कुटुम्बं
तस्यादिहैक्यं मम भारतेऽस्मिन्।।11।।

## योग्ये पदे पुष्टिदः

अद्यत्वे प्रथमां गतो नु पुरुषः श्रेणीं परीक्षासु यः
प्राप्ता स्याद्यदि वा छलेन गुरुणा पक्षेण चौर्येण वा।
योग्योऽसौ मतिमान् सदैव कुशलोऽर्हश्च सूच्चैः पदे
नन्वेकं विदुषां मतं सुविदितं प्रायस्तु संप्राप्यते।।1।।

अन्येषां च मते सदा भवति वै श्रेणी न चावश्यकी
सा वा स्यात् प्रथमा ततो भवतु वा श्रेणी द्वितीया पुनः।।
भेतव्यं न हि सा कदापि यदि वा श्रेणी तृतीया भवेत्
सम्बन्धी यदि कश्चिदस्ति भवतां योग्ये पदे पुष्टिदः।।2।।

यः साक्षात् कुरुते सभां कुशालिनामेक्सपर्टनाम्नां जनः
प्रश्नास्तत्र पतन्ति वै सुजटिलाः भ्रांतिप्रदाः क्लेशदाः।
सर्वे ते क्रमशश्च शीघ्रमथवा वांछन्ति सुष्ठूत्तरान्
नूनं सूत्तरितेऽपि तत्र भवतामावश्यकः पुष्टिदः।।3।।

नास्त्येवं खलु चेत् कदापि भवता ह्याशां नियुक्तेर्नहि
कर्तव्या यदि कांक्षसे सुखमहो चित्तस्य चाप्यात्मनः।
कुर्वन्नीश्वर-चिन्तनं हि सततं साहित्य-सेवा तथा
कुर्यास्त्वं नहि खिन्नता सुखकरा कालोऽथवैतादृशः।।4।।



## वितर वितर तोयम्

अयि तृषितजनानां जीवनं तोयमेत-
दसितलसितकान्तिश्चौरवद् भीतभीत।
झटिति झतिति नीत्वा वञ्चयित्वेव धावन्
परिचित विषयान् कान् यासि गुप्तं विधातुम्।।1।।

रणिति रणिति शब्दैर्मञ्जु मन्दं सुगर्जन्
विकिर विकिर तोयं नन्दयन् प्राणिजातम्।
तृणविटपलतानां वृन्दमाह्लादयंश्च
सुखय सुखय सर्वान् कीर्तिशुभ्रः प्रयाहि।।2।।

विदितमिह जगत्यां निम्नगास्तोयपूर्णा
दधति जलनिधौ तन्मोदमाना मिलन्ति।
जलधर खलु मन्ये वर्षितुं यासि सिन्धु-
मुपहरति जनोऽयं वित्तवद्भ्यः स्ववित्तम्।।3।।

वितर वितर दृष्टिं त्वत्र लोकास्तृषार्ताः
खगमृगलघुजीवाः ग्रीष्मतपताः श्वसन्ति।।
अहह वसुमतीयं तप्यतेऽङ्गारतुल्या
खलु कृपणनिभस्त्वं क्वान्यदृष्टिः प्रयासि।।4।।

वितर वितर तोयं यासि नीत्वा क्व मेघ
नहि नहि नहिनाम्ना सन्निभं ते ऽस्ति कर्म।
ददति ददति धीरा दानिनो बुद्धिमन्तो
धनजनबलहीनेभ्यः कृशेभ्यः स्ववित्तम्।।5।।

## कुरुत जनसेवां सुखमयीम्*

यदाऽधिक्यं दृष्टं जगति जडताया भवति वै
तदाऽनास्था धर्मे प्रसरति विरक्तिश्च नृहरेः।
जना संजायन्ते मदनवशगाः स्वार्थबहुलाः
सदा गर्वोन्मत्ताः कुटिलगतयो वञ्चनपराः।।1।।

नृशंसाः सक्रोधा हृदयरहिताः क्रूरमतयो
महाहिंस्राः पापाः पवनचपला मत्सररताः।
विवेकभ्रष्टास्ते प्रणयनयहीनाश्च विषमा
जडत्वं हित्वाऽतो भजत मनुजाश्चित्त्वमखिले।।2।।

प्रभोर्लीला ह्येषा विलसति पृथिव्यामनुपमा
त्विमे जीवाः सर्वे विविधविधरूपैरधिगताः।
न भिन्नास्त्वद्रूपाच्छृणुत सुधियो वेदवचनं
जडत्वं हित्वाऽतः कुरुत जनसेवां सुखमयीम्।।3।।

* 27-04-2006 ई. दिनाङ्के विरचितम्।



## श्रीव्याकरणाचार्यस्य पञ्चविंश पुण्यस्मृतौ

भालं यस्य विराजते स्म स्ततं दिव्यत्रिपुण्ड्रार्चितं
तेजोभिर्द्युतिमद्रराज नितरां यस्य प्रसन्नाननम्।
वासोभिःशुशुभेतरां तनुतरा यस्याङ्गयष्टिः सितैः
श्रीमाञ् जीवनलाल एष विदितो देवोपमः कान्तिमान्।।1।।

कण्ठे व्याकरणं च यस्य शुशुभे भाष्यैस्तथावृत्तिभिः
श्रीमद्भागवतं च यस्य रुचिरं वाल्मीकिरामायणम्।
जिह्वाग्रे प्रविराजतः स्म सततं स्तोत्रैःसहस्रैः सह
श्रीमाञ्जीवनलाल एष मतिमान् देवोपमः कीर्तितः।।2।।

काश्यां वै प्रथमं मया स मिलितो विद्यार्थिनो ऽध्यापयन्
पङ्क्तीनां विदधन् सुखं सुविशदां व्याख्यां विना पुस्तकम्।
व्याख्यानं करपात्रिणां सदसि वै यस्य श्रुतं मार्मिकं
श्रीमाञ् जीवनलाल एष विदितो लोकेषु देवोपमः।।।3।।

स्वाध्याये निरतः सदा सुकृतवानध्यापयद् बालकान्
शास्त्रार्थे प्रतिपक्षिणो विजितवान् विद्वत्समक्षं च सः।
सर्वत्र प्रथमः सभासु गणितः सर्वत्र यः सर्वदा
श्रीमान् जीवनलाल एष विदितोलोकेऽग्निहोत्री सुधी।।4।।

दुर्गासप्तशती च रुद्रसहिताऽष्टाध्यायिका पाणिने-
रास्तां यस्य निरन्तरं हि विदुषो नित्यस्य पाठ्क्रमे।
ज्योतिः शास्त्रफलं जगाद मुखतः शास्त्रप्रमाणैः सह
श्रीमाञ् जीवनलाल एष विदितो लोकेषु देवोपमः।।5।।

विद्यारत्नसुपूरितो जलधिवद् योऽभूद् गभीरः परः
ज्ञानाहंकृतिवर्जितोऽतिसरलो नम्रः स्वभावेन यः
आकृष्टा अभवन्जना पदनता यत्तेजसा भाविताः
श्रीमाञ् जीवनलाल एष विदितो लोकेऽभवद् देववत्।।6।।

प्राज्ञोऽसौ मिलितः प्रसन्नवदनो यत्र क्वचिद् वा क्षणे
श्लोकाञ् श्रावयति स्म तत्र रुचिरान् नव्यान् पुरा न श्रुतान्।
यत्रासौ गतवान् पुरे स मतिमांस्तत्राऽभवत् पूजितः
लोके जीवनलाल एष विदितो कान्त्या स देवोपमः।।7।।

द्वाषष्टिं परिपूर्य पुण्यवयसस्त्यक्त्वा तनुं भौतिकीं
वैकुण्ठेऽद्य विराजते सुखमये शोको न कार्यो जनैः।
पुण्यादत्र समागतः सुकृतिनामादर्शभूतो नृणा-
मायातः कतिचिद् दिनेभ्य इह वै कृत्वा स्वकार्यं गतः।।8।।

निर्वाणस्य च पञ्चविशंति समा याताः परं पुण्यवान्
मित्राणां विदुषां पवित्रहृदये प्रोत्साहयन् वर्तते।
देहेनाद्य न दृश्यते स्वयशसा जीवत्यसौ व्याप्नुवन्
श्रीमाञ् जीवनलाल एष विदितो लोकेऽत्र देवोपमः।।9।।

धन्या सा जननी पिता च सुकृती लेभे जनिं यत्र स
तत्पुत्रा अपि धन्यतां समगमन् येषां पिता त्वीदृशः
धन्यास्तत्पथगामिनः सहचराः धन्या वयं तैः सह
धन्यो जीवनलाल एष विदितो कार्यैः प्रकृष्टैर्निजैः।।10।।



शिष्या अस्य सहस्रशः समभवन् काश्यां तथा सागरे
विद्यादानपरा वसन्ति सुतरां सज्ज्ञान रक्षापराः।
तत्कीर्तिं च विवर्धयन्ति विशदां ख्याताः स्वयं विद्यया
धन्यो जीवनलाल एष विदितो लोकेषु देवोपमः।।11।।

व्याकरणाचार्य इत्येवं लेभे लोकेषु यः ख्यातिम्
तस्य पवित्राचरणं सर्वत्र प्रेरयिष्यत्यस्मान्।
आचार्य स्वतपःपूतो यातोऽसि परमं पदम्
अत्र स्थिता वयं विद्वन् प्रणमामः पुनः पुनः।।12।।

# नूनं हितं परहिते भविता नराणाम्

सत्यं सदैव जयते ननु मृत्युलोके
हिंसा बुधैर्निगदिता परिहारयोग्या।
देयं धनं जनहिताय सुखाय नित्यं
लोभेन ते मलिनता मनसश्च बुद्धेः।।1।।

त्याज्यो मदश्च लघुता न कदापि धार्या
द्वेषश्छलः परिभवश्च न गौरवाय।
औदार्यमेव कुरु नित्यमिहात्मभावं
सर्वेषु जीवनिकरेषु दयां कुरुष्व।।2।।

पीडां हरस्व जनजीवन संस्थितां च
कायेन शुद्धमनसा वचसा क्रियाभिः।
प्राणान् प्रयच्छ समये यदि काङ्क्षिताः स्यु-
र्नूनं हितं परहिते भविता नराणाम्।।3।।

वासांसि भूरि भवनानि धनं च विद्या
भूमिः पदं त्वभिमतं वसुधाधिपत्यम्।
रत्नानि वा रुचिकराणि कलाश्च मानो
नित्यानि नैव भुवि मानव चिन्तयैतत्।।4।।

नार्यः सरोजनयना अतिकोमलाङ्ग्य-
श्चित्तं हरन्ति नितरां स्वकटाक्षपातैः।
माया प्रभोर्विलसिता तव मोहनाय
जानीहि रे कुरु तथैव यथा हितं ते ।।5।।



कीटाः सरीसृपमृगा वृक हस्तिसिंहाः
श्वानः शृगाल खर सूकर वृश्चिकाद्याः।
मृत्युं व्रजन्त्यगणिताः पशवोऽत्र नित्यं
शस्तागतिर्निगदति न हि सज्जनैः सा।।6।।

दीनाबलार्ति परिपीडितनिर्बलानां
विद्यावतां विमलशीलवतां सतीनाम्।
रक्षार्थमेव कतिचित् खलु सज्जनानां
प्राणांस्त्यजन्ति तृणवद्धि जनाःसुधन्याः।।7।।

आर्तस्वरेण कतिचित् प्ररुदन्ति मृत्यु-
शय्यां गताश्च विलपन्ति हि दुःखदुःखम्
केचिद्धताः परवशा इव हिंस्रजीवैः
दत्तासवः परहिते खलु धन्यभाग्याः।।8।।

## द्वादश मासाः *

वैशाखे ग्रीष्मघर्मे प्रवहति पवनो दाहको वह्निकल्पः
कासारे स्वल्पनीरे स्फुरति च विकलः कीदृशः पश्य मीनः।।
रामो मे लक्ष्मणो मे जनकतनयया हा भविष्यन्ति कुत्र
कैकेयी क्रूरचित्ता विपिनमगमयत् कोमलौ बालकौ मे।।1।।

ज्येष्ठे मासे प्रतप्ते तपति वसुमती भर्जितुं प्राणिजात-
मूर्ध्वे भानुः करालः प्रतपति किरणैस्तीक्ष्णतीक्ष्यैः समन्तात्।।
बालौ मे पद्मकल्पौ सरसिजचरणौ प्रस्थितौ राजपुत्रौ
कैकेयी वज्रतुल्या विपिनमगमयद् राज्यलोभात् प्रसह्य।।2।।

आषाढोऽयं प्रवृत्तः सघनजलधरा हन्त गर्जन्ति घोरं
नृत्यन्त्येते मयूराः श्रुतघननिनदाश्चातका वै सशब्दाः।।
अस्मिन् काले जलार्द्रा गहनविपिनगा कुत्र वत्स्यन्ति बालाः
कैकेयी दुःखदा मे विपिनमगमयद् बालकौ कोमलौ मे।।3।।

सम्प्राप्तो भाद्रेमासो भुवि दिवसनिशं वारि वर्षन्ति मेघा
दीव्यत्येषा च विद्युज्जन हृदि भयदा दारयन्ती च कर्णौ।।
सीता मे कुत्र रामः क्व च सुभगतनुर्लक्ष्मणो मे कुमारः
कैकेय्या प्रेषितास्ते खलु सखि विपिनं राज्यलोभात् प्रसह्य।।4।।

संप्राप्तश्चाश्विनोऽयं विदधति मनुजाः श्रद्धया धर्मकार्यं
रामो गेहेऽभविष्यद्यदि च सललितो लक्ष्मणो मे कदाचित्।।
नाना दानान्य दास्यं प्रतिदिवसमहो ब्राह्मणान् भोजयित्वा
कैकेयी बाधिकाभूत विपिनमगमयत् सा सपत्नी ममेति।।5।।

* मई 2005 ई. विरचिता लोकगीताश्रिता कविता।



कार्तिकमासः पवित्रो विलसति रुचिरो यत्र दीपान् सहर्षा
लोकाः प्रज्ज्वालयन्ति प्रतिगृहभवनं पूजयित्वा तु लक्ष्मीम्।।
गेहे नास्त्यद्य रामो न जनकतनया लक्ष्मणो न प्रियो मे
कैकेयी मे प्रियाऽऽसीद् विपिनमगमयत् कोमलौ बालकौ मे।।6।।

पौषो मासोऽयमाप्तः प्रवहति पवनः खड्गधारेव तीक्ष्णः
कृन्तत्यङ्गानि मन्ये प्रसरति परितो धूमकल्पस्तुषारः।।
रामो मे लक्ष्मणो वनभुवि चरतो भूमिशय्यां शयाते
तद्वन्मोघोऽपि दीर्घो विपिनमगमयत् कैकेयी मे सुतौ द्वौ।।7।।

आयातः फाल्गुनोऽयं सुकुसुमसुभगाः होलिका यत्र रम्या
रङ्गै क्रीडन्ति लोकाः प्रतिदिवसमहो हर्षमग्नाः स्वमित्रैः।।
किं वा कुर्यामरण्यं प्रहितनिजसुता भाग्यहीनाऽत्र पुर्यां
कैकेयी मे सुतौ द्वौ विपिनमगमयद् राज्यलोभात् प्रगल्भा।।8।।

इत्थं वै राजराज्ञी स्वतनयविरहे सततं दुःखमग्ना
कौशल्या साधुवृत्ता गणयति दिवसान् हन्त रामागमस्य।।
मार्गं संप्रेक्षमाणा न्यवसदथ चिरं चिन्तयन्ती स्वपुर्यां
कैकेयी दुःखदाऽभूद् विपिनमगमयद् यत्सुतौ कोमलौ द्वौ।।9।।

## अधुना भारतवर्षेऽध्ययनं जातं कठिनतमम्

अधुना भारतवर्षेऽध्ययनं जातं कठिनतमम्।।
भोजनमस्तु गृहे वा मास्तु पठनं मुख्यतमम्।।1।।

प्रवेशशुल्के सहस्रमुद्रा दानं प्रथमतमम्।
पश्चान्मासिकशुल्कयोजनं खल्वनिवार्यतमम्।।2।।

टाई शर्ट पेन्ट परिधानं चर्मपादुकासहितं।
गगनस्पर्शि च पुस्तकमूल्यं क्रेतुं कठिनतमम्।।3।।

पृष्ठे गर्दभवाह्यं भारं वहन्ति बालाः प्रचुरम्।
एतद् व्यवस्थापनं सर्वं निर्धनाय कठिनम्।।4।।

सम्पन्नेभ्यः किमपि न कठिनं सर्वं सुखावहम्।
यानसाधनैः सुखेन यान्ति सद्यो दूरतरम्।।5।।

प्रयान्ति पद्भ्यां घर्मश्रान्ताः केचिच्छीघ्रतमम्।
पाठ्यक्रमो विशालः पठितुं चैतत् प्रत्यक्षम्।।6।।

गणितं भूगोलं विज्ञानं भाषात्रयपठनम्।
अनिवार्यं छात्रेभ्यः सर्वं राजनीतिपठनम्।।7।।

दूरदर्शनैर्ध्वनेर्दूषणैः सर्वं दोषमयम्।
किं कुर्वन्तु बालकाः सरलाः कथं भवेदध्ययनम्।।8।।



शिक्षका व्यवसाये लग्नाः शिक्षण शैथिल्यम्।
क्षमता वास्तु तथा वा नास्तु पठनं दिवानिशम्।।9।।

अनिवार्यं च परीक्षाशुल्कं देयं प्रचुरतमम्।
समानमेव निर्धनधनिकेभ्यो नास्मिन् वैषम्यम्।।10।।

नीचैः शिक्षास्तरं प्रयातं सर्वं विज्ञानम्।
तथाप्युच्चस्तरे परीक्षा जनयत्याश्चर्यम्।।11।।

अनुत्तीर्णबालानां संख्या त्रिगुणा प्रतिवर्षम्।
तथापि नेतारः किल मौना इति विस्मयजनकम्।।12।।

अत्यादरोस्त्याङ्ग्लभाषायास्तस्या अध्ययनम्।
उपेक्षितं च संस्कृताध्ययनम् इति हृदये दुःखम्।।13।।

अथ विश्वविद्यालयेष्वध्ययनं व्ययसाध्यं सततम्।
वृत्यर्थं भ्रमणं तत्पश्चाद् इत्याश्चर्यकरम्।।14।।

अधुना भारतवर्षेऽध्ययनं जातं कठिनतमम्
भोजनमस्तु गृहे वा मास्तु पठनं मुख्यतमम्।।15।।

## जीवानां त्वं विलक्षणोऽसि

मशक त्वं लोके ख्यातोऽसि
क्रूरे कर्मणि त्वं प्रथमोऽसि।।
आकृत्या सर्षपतुल्योऽसि
जीवानां त्वं विलक्षणोऽसि।।1।।

नगरे नगरे तवाधिकारः
प्रति गृहकोणं तवावतारः।।
आस्ते तव सर्वत्रातङ्कः
काचित्तव हृदये न हि शङ्का।।2।।

सदा सेनया सहितो गच्छसि
न हि कस्माच्चिद् भयभीतोऽसि।
राजप्रासादेषु प्रविशसि
मशकरक्षिणी मध्ये प्रविशसि।।3।।
वस्त्रान्तः सूचीं प्रवेशयसि,
जीवानां त्वं विलक्षणोऽसि .......

यथा च कमले मधुपो गायति
कुसुमोपरि मधुमक्षी गायति।।
उत्साहेन समुड्डयमानो
मानव शिरसि तथा त्वं गायासि।।4।।

पूर्वं कणे मधुरं गायसि
नम्रश्चरणयोस्त्वं पतसि।।
अग्रे पृष्ठे पार्श्वमधस्तात्।
उर्ध्वं मूर्ध्नः सततं भ्राम्यसि।।5।।



कर्णं प्राप्य सूचनां दत्से
वीरसमः पश्चादाक्रमसे।।
निजाभीप्सितं सद्यः कृत्वा
त्वरितं तत्स्थानादुड्डयसे।।6।।

हस्तौ पादौ तवाति सूक्ष्मौ
नेत्रे सूक्ष्मे पक्षौ सूक्ष्मौ।।
तथापि धावसि भो बहुवेगान्
नेत्राभ्यां पश्यस्यतिदूरात्।।7।।

कुतश्च सूक्ष्मा सूची प्राप्ता
कुतश्च शिक्षा दीक्षा प्राप्ता।।
नैतादृशी केनापि निर्मिता
नाद्यावधि संसारे दृष्टा।।8।।

अशने पूजाकरणे शयने
कार्ये बालानामध्ययने।।
उपद्रवांस्त्वं कुर्वन् बहुलान्
उपस्थापयसि बाधामतुलाम्।।9।।

कण्ठे स्कन्धे कर्णे भाले
नासोपरि भृकुटौ कपोले।।
कदापि वक्षसि चक्षुस्युदरे
दृष्ट्वा जनं व्याकुलं कुरुषे।।10।।

बाले वृद्धे नार्यां युवके
न त्वं किन्चिद् भेदं कुरुषे।।
मत्वा सर्वान् समान प्रकृत्या
निजलक्ष्यं त्वं सततं तनुषे।।11।।

इयं कुशलता कुत आयाता
क्षिप्रकारिता कुत आयाता।।
बह्वाश्चर्यं लोकः कुरुते
मर्म च कश्चिन्न हि जानीते।।12।।

मनसो वार्ता त्वं जानासि
जनेन दृष्टश्चेदुद्यासि।।
पीत्वा रक्तं त्वरितं गच्छसि
रिक्त स्थाने विषं मेलपसि।।13।।

शीतज्वरनिपीडितो मनुजः
सर्वशरीरे कष्टं सहते।।
पश्चान्निर्बलतामनुभूय
विष्टरेषु परिवर्तं कुरुते।।14।।

मशक त्वं लोके ख्यातोऽसि
क्रूरे कर्मणि त्वं कुशलोऽसि।।
आकृत्या सर्षपतुल्योऽसि
जीवानां त्वं विलक्षणोऽसि।।15।।



## अवर्णनीयः किल संसारः

अवर्णनीयः किल संसारो
दृष्टौ सारवान् निःसारः।।
अस्यानन्तगुणो विस्तारो
मातुमशक्यो भवत्यपारः।।1।।

आस्ते नभसो महाप्रसारो
यत्रागणिता विभान्ति ताराः।।
प्रतितारं कियानाकारः
केचिन्न हि लोके मातारः।।2।।
महाविशालोऽयं संसारः....

महासमुद्रा अस्मिन् परितः
निर्मलसलिला वहन्ति सरितः।।
उड्डीयन्तेऽनन्ता विहगाः
शुकपिकहंससारसाः सुभगाः।।3।।

सकण्टकानि गहनानि वनानि
लतापुष्पफलसुसज्जितानि।।
व्याघ्रसिंहगजमृगपूर्णानि
भयावहान्यापि रमणीयानि।।4।।

उत्पाद्यन्ते विविधाः कामा
अन्तः करणे न हि विश्रमः।।
प्रयत्नसाध्याः केचित् पूर्णा
अन्येऽनन्ताः सततमपूर्णाः।।5।।
परमविचित्रोऽयं संसारः .....

गगनस्पर्शि च सौधं कुरुते
परितः कुसुमोद्यानं कुरुते।।
दिव्यां सुखसामग्रीं धत्ते
रत्नैः पत्नीमपि भूषयते।।6।।

रुचिरे समये विहसति गायति
पतिते दुःखे चिरं प्ररोदिति।।
मोहान्नारी विवशो नृत्यति
दिक्षु विदिक्षु च धनाय धावति।।7।।

यानैः कठिनां यात्रां कुरुते
शीतं घर्मं वर्षा सहते।।
रागद्वेषैर्वैरं कुरुते
चिन्तातुरो न निद्रां लभते।।8।।

वृथा राष्ट्रयोर्विषमं युद्ध-
ममानवीयं नियमविरुद्धम्।।
यत्राऽनन्तो नरसंहारः
कश्चिद् यस्य नास्ति परिहारः।।9।।

भ्राम्यति सुखलाभार्थं दीनः
आशाबद्धः शान्तिविहीनः।।
धर्मं श्रूयते तीर्थं श्रयते
स्वर्गार्थं च महेन्द्रं यजते।।10।।

कीर्त्यर्थं धनदानं कुरुते
परेश्वरं भगवन्तं श्रयते।
दिवानिशं त्वपराधं कुरुते
सुखाय धातारं प्रार्थयते।।11।।



न हि परिवर्तनमात्मनि कुरुते
कोपान्मानस दुःखं सहते।।
भाग्य एव विश्वासं कुरुते
निजभारं श्रीरामे धत्ते।।12।।
जटिलः कठिनः किल संसारः ......

द्रष्टुं यद्यपि बहुकमनीय-
स्तथापि नायं विश्वसनीयः।।
प्रतिक्षणं परिवर्तनशीलः
सततभङ्गुरो विनशनशीलः।।13।।

गगने चलन्ति ऋषयः सप्त
वहन्ति तरणिं तुरगाः सप्त।
तत्किरणेषु च वर्षाः सप्त
रविशशिकुजबुधगुरुभृगुशनयो
जगद्रक्षितुं ग्रहाश्च सप्त।।14।।

अस्मिन् भारतवर्षे पुण्ये
मोक्षदायिकाः पुर्यः सप्त।
सप्तधातुभिर्देहधारणं
स्वरैः सप्तभिर्मधुरगायनम्।।15।।

भूरादयः सप्त किल लोका
अतलाद्याः सप्ताधोलोकाः।।
कृतपुण्यानां महेन्द्रलोकः
पापिजनानामथ यमलोकः।।16।।

प्रेतभूत रक्षोगणलोकः
सौख्यमयश्च पितृजनलोकः।।
रणे मृतानामभयो लोको
भगवद्भक्तानां ध्रुवलोकः।।17।।

गन्धर्वाप्सरसामपि लोको
हरिशरणानामथ गोलोकः।।
ब्रह्मविष्णुरुद्राणां लोको
धर्मा धर्ममयो नर लोकः।।18।।

भानुस्तपति जीवयति जीवान्
सुखयति सततं हरति च रोगान्।।
हृत्वा तमः प्रकाशयति निखिलं
सुभगं सरसि विकासयति कमलम्।।19।।

निशि रमणीयः सुधांशुरुदयति
हसति कुमुदिनी नलिनी म्लायति।।
प्रियया सहितः प्रियः प्रसीदति
तया वियुक्तो जनो विषीदति।।20।।

प्राणिनां गणनां कः कुर्याद्
विचित्ररचनां को जानीयात्।।
भिन्ना गुणा विलक्षणा रुचयो
भिन्नास्तेषां गतयो मतयः।।21।।

खगा मिलित्वा मृदु गायन्ति
श्वानः परस्परं बुक्कन्ति।।
साधून् सदा खलाः क्लिशनन्ति
मत्स्याः मत्स्यानिह खादन्ति।।22।।



किमधिकरणको केन निर्मितः
किं प्रयोजनं कथं निर्मितः।।
अस्य रहस्यं को जानाति
सर्वं विस्मयकरं विभाति।।23।।

ब्रह्मा सृजति पालयति विष्णुः
संहरते च हरः पुरजिष्णुः।।
भवति तथास्य च पुनः प्रसारः।
पुनर्भवत्यमितो विस्तारः।।24।।

उपमा रहितोऽयं संसारो
ज्ञातुमशक्योऽयं संसारः।।
पारयितुं कठिनोऽयमपारो
वाचाऽवर्ण्योऽयं संसारः।।25।।

## निर्धना अति निर्धनाः

दिने दिनेऽद्यदेशेऽस्मिन् निर्धना अति निर्धनाः।
कुबेरा इव नेतारः शासने चाधिकारिणः।।1।।
एकतः सन्ति प्रासादाः शिखरैर्व्योमचुम्बिनः
महार्हद्रव्यं सम्पन्नाः सज्जिता दशभूमिकाः।।2।।

समुज्ज्वल प्रकाशाश्च दृष्टिर्यत्र स्थिरा न हि।
शुभ्रस्फटिकसौपानैः कुट्टिमैश्च सुशोभिताः।।3।।

दुकूलक्षौमकौशेयवासोभिः सुमनोहराः।
वातानुकूलिता दिव्याः सर्वकालसुखावहाः।।4।।

वातायनानि रम्याणि यत्र भान्ति सहस्रशः।
सुगन्धि कुसुमोद्यानैर्जलयन्त्रैः सुशीकराः।।5।।

अन्यत्र श्रमिका येषां वासस्थानं न विद्यते।
यन्त्रेषु यन्त्रवत्ते च लग्नाः सन्ति दिवानिशम्।।6।।

पोषणार्थं च बालानां शिक्षार्थं च धनं न हि।
समयं न व्यवस्थायै ते लभन्ते कदाचन।।7।।

चिकित्सायाश्च का वार्ता व्यवसाध्या हि सा परा।
औषधयो महार्हाश्च धनलुब्धाश्चिकित्सकाः।।8।।

प्रजातन्त्रे प्रजानां हि महत्त्वं नैव दृश्यते।
केवलं मतदानाय ते मता अधिकारिणः।।9।।



प्रजानां न विकासोऽस्ति प्रजाप्राप्तधनैरपि।
दृष्टो विकासो नेतॄणां सद्मनामुदरस्य च।।10।।

सहयोगिजनानां च केषाञ्चिदधिकारिणाम्।
विकासार्थं धनं यच्च तदार्धं क्वापि लीयते।।11।।

अर्धेन क्रियते कार्यमर्धमेवाव्यवस्थितम्।
ततःपुनर्विकासार्थं धनमाकाङ्क्ष्यते बहु।।12।।

उद्योगपतयः सर्वे धनसंचयतत्पराः।
विज्ञापनविशेषैस्ते हरन्ति प्रचुरं धनम्।।13।।

वस्तुष्वेकाधिकारोस्ति तेषां हि लवणादिषु।
औषधानि चलन्त्यद्य कृत्रिमान्यपि भारते।।14।।

करचौर्यं प्रकुर्वन्तो क्रीणन्त्यपि च शासनम्।
ऋणवानद्य देशोऽयं कस्मै देयं प्रदूषणम्।।15।।

अर्वुदं येत्र मुष्णान्तिच्छलेन च बलेन च।
ते संसदि विजेतारो जयोद्घोषैः प्रपूजिताः।।116।।

निर्दोषाः स्वल्पदोषा वा दण्ड्यन्ते न्यायनिर्णये।
समर्था न दोषाय रविपावकसन्निभाः।।17।।

समूलमुत्खन्यन्ते वृक्षा वन्याधिकारिभिः।
नाश्यते वनसम्पत्तिर्नासाग्रे वनमन्त्रिणाम्।।18।।

कन्दमूलफलादीनि येषां वृत्तिः सनातनी।
ते भ्रमन्ति निराशाश्च वृत्तिहीना निराश्रयाः।।19।।
इन्धनं दुर्लभं जातं तैलं क्वापि न लभ्यते।
महाहं गैसभाण्डं च क्रयशक्तिपरं हि तत्।।20।।

शिक्षाक्षेत्रं वरीवर्ति शिथिलं सर्वतो दिशम्।
अत्र खेलन्ति नेतारश्छात्राणां जीवनैः सह।।21।।

पञ्चविंशति संख्याकाश्छात्राः प्रतिशतं त्विह।
प्रतिवर्षं प्रदेशेस्मिन् समुत्तीर्णा भवन्ति हि।।22।।

अनुत्तीर्णाः प्रतिशतं यत्र पञ्चसप्तति।
शिक्षाविद्भिर्न वै कश्चिद्धेतुस्तत्र विचार्यते।।23।।

देशकोषः क्षयं याति स विदेशे विवर्धते।
को वैरं वर्धयेज्जानन् चौराश्चौर सहोदराः।।24।।

लभ्यो न्यायालये न्यायो जीवनान्ते न संशयः।
सहस्त्रशोऽधिवक्तारस्तत्र सन्ति पदे पदे।।25।।

देश सीम्नि स्थिता वीराः सावधाना अहर्निशम्।
स्वस्य प्राणाहुतिं दत्वा देशं रक्षन्ति यत्र वै।।26।।

तत्रैव देशनेतारो विलासाय यतन्ति चेत्।
तेषां प्राणाहुतिर्व्यर्था देशोऽपि न सुरक्षितः।।27।।

आचारसंहिता चर्चा क्रियते बहु सांसदैः।
देशोन्नतिः सदाचाराद् आचारादेव सम्पदः।।28।।



गान्धिशास्त्रिजयोद्घोषैर्न हि देशोन्नतिः क्वचित्।
तदर्थं त्यागिभिर्भाव्यं जनैस्तदनुगामिभिः।।29।।

प्रजातन्त्रे तु वैषम्यं विनाशायैव केवलम्।
अतः समत्वमादेयं जनैः प्राणपणैरिह।।30।।

## मनो निकाममधीरम्*

नक्तं वस्तुं याति नित्यशो दयितः क्षेत्रकुटीरम्
अत्र वधूर्जागर्ति सतर्षा मनोनिकाममधीरम्
पौषे मासे सा परिणीता ज्येष्ठे पुनरानीता
चत्वारो दिवसाः खलु याताः सोन्यं ग्रामं यातः
आषाढे हलभृतिरारब्धा निशि संप्राप्तो गेहम्
ताडित इव विष्टर आपतितः प्रातश्चलितः स्वैरम्।
नक्तं वस्तुं याति...

प्रातर्यातो द्रुतमुत्थाय प्रोत्पाटयितुं शस्यम्
नभसि नभस्ये तृणोत्सारणं वसुन्धरासु प्राज्यम्
करोमि किं वा सखि चैतस्मिन् निद्रा स्पृशति न नेत्रम्
ततो निवृत्ते कथमपि वैरात् पक्वं ब्रीहिक्षेत्रम्।
नक्तं वस्तुम्.........

ब्रीहौ वैरिणि गृहमायाते क्षुद्रकोद्रवः फलितः
एकस्मिन् दिवसेऽपि न दयितो गृहमावसितुं शक्तः
करोमि किं वा सखि कालेऽस्मिन् उत्पीडयति शरीरम्
मध्येरात्रं मृदुवक्षसि मे शूलमुदयतेऽधीरम्
नक्तं वस्तुम्.........

उत्तिष्ठति मम वक्षसि शूलं ज्वलतुतरामुपवासः
पौषमाघशीतलता लग्ना गतो न पर्वतवासः,
करोमि किं वा सखि दुःखेऽस्मिन् नैव लक्ष्यते तीरम्
दिन एकस्मिन् गृहे स्थितोऽभूत क्षेत्रं श्रितकिरिकीरम्।
नक्तं वस्तुं.........

*बुन्देलीलोकगीतानुसारम्।



सूकरवृन्दैश्चरिते क्षेत्रे गतः फाल्गुनव्यूहः
दयितो मे प्रतिवसति खेटके मनसि वर्धते मोहः,
चैत्रे मासे लवितुं क्षेत्रं नरास्तत्पराः स्वैरम्
मनोलालसा मनसि श्रान्ता मिलितुं चेतोऽधीरम्।

नक्तं वस्तुं याति नित्यशो दयितः क्षेत्रकुटीरम्
अत्र वधूर्जागर्ति सतर्षा मनो निकाममधीरम्।।
नक्तं वस्तुं.........

## मेघैः सन्देशः

नवसलिलधरा भो नीलवर्णा मनोज्ञाः
शृणुत शृणुत मेघा पृच्छत प्राप्य कृष्णम्।
नवलमलिननीलं पीतवासो वसानं
व्रजवनवनिताः किं पातिता दुःखसिन्धौ।।

# तृतीयखण्डः
## अनूदितलघुकाव्यम्



## मातृमूर्तिः*

शशधरवदनं ते शान्ति - पीयूषवर्षि
प्रिय-मलयसमीरः प्राणवत् त्राणदाता।
तव खलु महिमानं भूरि शंसन्ति देवा
जय जय जय मातर्मातृभूमे भवानि।।1।।

हरित-विमल-सस्यं हर्षदं स्वाञ्चलं ते
हिमगिरिहृदयाद्वै प्लावयेते समन्तात्।
सुरसरिदनुयाते ब्रह्म - सूर्यात्मजे ते
जय जय जय मातर्मातृभूमे भवानि।।2।।

नवकुसुमफलैस्ते भूषणं कल्पनीयं
जटितमिव सुरत्नैरम्बरं छत्रकं ते।
किरति जलधरोम्भः केशतो मौक्तिकानि
जय जय जय मातर्मातृभूमे भवानि।।3।।

अविरतवरदोऽन्तःशूलहारी करस्ते
लसति जलधि-काञ्ची नूपुरौ हेम-लङ्का।
जगदवसि च सत्यं सिंहपीठस्थितेव
जय जय जय मातर्मातृभूमे भवानि।।4।।

स्वभुजविजितविश्वा विश्वजिद्यज्ञ-शीलाः
कुश-विलुलितकोषा मृत्तिकापात्र-शेषाः।
अहह तव बभूवुः सूनवः पुण्यशीला
जय जय जय मातर्मातृभूमे भवानि।।5।।

*काव्यकौमुदीसङ्कलनात्।

अपि तुलितमतीतं ते जनैरर्हणीयं
हितकरमधुना तद् भावि सिद्धि-प्रदञ्च।
इति मनसि विचिन्त्याहं च पूर्णाभिमानो
जय जय जय मातर्मातृभूमे भवानि।।6।।



# चिरिण्टी *

न चक्रिकां नैव च तूलपिण्डीं
जानाति संचालयितुं चिरिण्टी
भर्तुं क्षमा नास्ति च कूपतोयं
कहारिणीमानय तत्सहायाम्।।1।।

ददात्यलङ्कारमसौ न पादयो-
रस्यै द्रुतं कारय रौप्यमेखलाम्।
जानाति कर्तुं चणकैः सुरोटिकां
सूपं पिपक्षत्यपि सैन्धवं विना।।2।।

स्वमातृगेहं बहुधा प्रयाता
ततश्च सा नानयतीह किञ्चित्
जानाति न क्षेत्रवनादि -कार्यं
प्रयातु वह्नौ वपनादिकं ते।।3।।

मन्नाम ''हलुआ'' तव तातदत्त
मस्याः ''सलौनी'' ति च नाम रम्यम्।
नैवाहमीशे निजकार्यसिद्धे-
रियञ्च नो बालवधूः कृशाङ्गी।।4।।

* बुन्देलीलोकगीतानुवादः रेंटा कटे ने पौनी ........ देखत की जा नौनी....... ।

# युद्धम्*

युद्धेऽथ कुत्र नियमा भुवि पालिता वै
हित्वा निजाँश्च परिपन्थिजनान् सहान्यैः।
योधा वृथा युयुधिरे न परं स्वदेशे
जाताः कदापि नहि ते रणदुर्मदान्धाः।।1।।

युद्धे स्थिताश्च रथिनो गजिनोऽश्ववारा-
स्तत्राश्विभिः सुरथिभिर्गजिभिः क्रमेण।
प्रायश्च पत्तिभिरभूदपि पत्ति - युद्धं
दृष्टः श्रुतो न नियमातिगमः कदाचित्।।2।।

श्रान्ताय वै स्वरिपवेऽवसरं ददुस्ते
न प्राहरन् निजशरैः खलु वर्महीनम्।
वाग्युद्धमेव तनुते यदि कोपि शत्रु-
स्तेनैव वा युयुधिरे खलु धर्मधीराः।।3।।

न प्राहरन् युधि पराजितमानिनं ते
सद्यो निरस्त्ररिपवे व्यतरन्निजास्त्रम्।
गृह्णाति चेन् न हि रिपुः परकीयहेतिं
त्यक्त्वाऽपि तं प्रविविशुः खलु बाहुयुद्धे।।4।।

तेषामभूत् प्रधनभूर्नवरङ्गभूमिश्
चाराश्च जीवनपणैरपि तत्सहायाः।
ते बान्धवा इव नियुद्धविरामकाले
स्मेराननाः सममिलँश्च मिथः स्वदोर्भ्याम्।।5।।

*जयभारतात्, पृ. 362-363।



वध्या न शस्त्र-भरवाहिजना हि यत्र
दूरेऽपि तत्र परिचारकवन्दिवार्ता।
वीराश्च तत्र रणदुन्दुभिवादका ये
तेऽमादयन्नुभयपक्षधरान् प्रयत्नात्।।6।।

# नीतिवल्लरी *

कदली-बदरीसङ्गः कथं क्षेमाय कल्पताम्।
दोलायते रसेनैका विदीर्णाङ्गी तथापरा ।।1।।
मानवास्ते मृता ये वै याचन्तेऽन्यगृहं गताः।
तत्पूर्वं ते मृता नूनं नेति निर्याति यन्मुखात्।।2।।
विलोक्य महतो लोकान् नोपेक्षस्व जनान् लघून्।
यत्र सूच्या भवेत् कार्यं तत्रासिः किं करिष्यति।।3।।
यदि खर्जूरवद् दीर्घः सखे जातोऽसि तेन किम्।
अत्रच्छाया न पान्थेभ्यो बहुदूरे फलानि च।।4।।
यो हि रक्षति निर्मूलाममृतव्रततिं हरिः।
प्रभुमेवंविधं हित्वा कमन्यं मृगयेमहि।।5।।
निजं मनो वशे यस्य शरीरं कुत्र यास्यति।
सलिले पतिता छाया स्नापयेन्न कलेवरम्।।6।।
अनुनेयाः शतं रुष्टाः सज्जना मानवैरिह,
त्रुटिता अपि संयोज्या मुक्ताहाराः पुनः पुनः।।7।।
कम्बलं वास्तु कौशेयं शीतहानिरभीप्सिता
कार्यं नैवान्नभेदेन बुभुक्षाशान्तये नृणाम्।।8।।
आलिङ्गन्त्यङ्गनां मूढाः सन्तो यामत्यजन् बुधाः।
नरास्त्यजन्ति यद् वान्तं स्वादात् खादन्ति कुक्कुराः।।9।।
स्वभारं भ्राष्ट्रसात्कृत्य नदीपारमहं गतः।
निमग्ना मध्यधारायां धृतभाराः स्वमूर्धनि ।।10।।
क्रीणीताद्यैव हट्टेऽस्मिन् क्रेतुमिच्छा भवेत् यदि
नाग्रे प्राप्स्यसि सामग्रीं लम्बमार्गः प्रतीक्षते।।11।।
क्षुद्राणां हि समुत्पाताः सदा क्षम्या मनीषिभिः।
भृगोः पादप्रहारेण का वाऽऽसील्लघुता हरेः।।12।।
दीनानां ये हिते लग्ना महान्तस्ते जना मताः।

* अनूदिता रहीमकवेर्द्विपदिकाः।



वराकोऽपि सुदामाऽसौ युयुजे कृष्ण-सौहृदैः।।13।।
दीनाः सर्वान् प्रपश्यन्ति दीनान् कश्चिन्न पश्यति।
यश्च पश्येज्जनो दीनान् स तुल्यो दीनबन्धुना।।14।।
सन्तः परोपकारेषु कार्पण्यं नैव कुर्वते।
ददौ दधीचिरस्थीनि स्वमांसं च शिविर्नृपः।।15।।
कराभ्यां कुरु कर्माणि सिद्धिर्विधिकरे स्थिता।
अक्षाः सन्ति निजे पाणौ वशवर्ती च नो पणः।।16।।
कार्ये त्वन्यादृशो लोकः पूर्तावन्यादृशः पुनः।
वाह्यते मुकुटं नद्यां विवाहानन्तरं द्रुतम्।।17।।
श्रेष्ठाः शंसन्ति नात्मानं नालपन्ति च ते वृथा।
मूल्यं मे दशलक्षाणि कदा ब्रूते महामणिः।।18।।
दिवसानां गतिं वीक्ष्य मौनं धृत्वा वसेन्नरः।
आगते सुदिने कार्यमचिरात् संभविष्यति।।19।।
आपत् संजायते श्रेष्ठा स्वल्पकालाय सा यदि।
अहितः को हितः को वा जगत्यामिति वेद्यते।।20।।

# गङ्गास्तुतिः *

स्नात्वा स्नात्वा पवित्रं न हि पिबसि कथं गाङ्गमातुष्टि नीरं
मानुष्यं प्राप्य भूमौ न हि कथममृतं सेवसे रामनाम।
हित्वाङ्घ्री शाङ्र्गपाणेर्भवसि खलु कथं देहगेहाभिमानी।
मत्तानां मूर्ध्नि मृत्युर्नटति हि भयदः सर्वदा चण्डरूपः।।1।।

जाता वैरञ्चिपात्रे चरणसरसिजं याश्रयद् वामनस्य
ब्रह्माण्डाच्च स्खलन्ती शिवशिरसिगता शोभते सर्वदा या।
विख्याता जाह्नवी या निरूपममहिमा जह्नुजङ्घानिवासात्
दीनानां श्रेयसे सा त्रिपथमनुगता सत्वरं सिद्धिदात्री।।2।।

सेयं गङ्गेति नाम्ना प्रवहति ललिता गां गता भारतस्य
सर्वेषां पापहन्त्री सकलसुखकरी सर्वसम्पत्तिदात्री।
सेयं मोक्षप्रदात्री त्रिजगति विदिता धर्मकामार्थदात्री
ख्याता भागीरथीयं नृपतिरथगता याति नित्यं पृथिव्याम्।।3।।

कूर्मे स्थितः क्रोडस्तदुपरि शेष स्थितः
शेषतनौ फणानां सहस्रं विराजते।
एकस्मिन् फणे यस्य धराधरयुता धरा
तदुपरि राजतो महागिरी राजते।।4।।

राजने गिरौ स्थितः शम्भुः सुरनायको
यन्मूर्धनिजटाजूटज्योतिर्विराजते।
भ्राजते जटाजूटे चञ्चला चन्द्रच्छटा
चन्द्रच्छटासु गाङ्गधाराच्छटा राजते।।5।।

*हिन्दीकविपद्माकररचितगङ्गास्तुतेः संस्कृतनुवादः। ''कविपद्माकर'' पुस्तकाद् आचार्य नन्ददुलारे वाजपेयी कृतात् सङ्ग्रहात्।



पापपुरुष यथा पुरा मत्तो न विभीतस्त्वं
तथा चाद्य त्वत्तो मूढ नाहं भेष्यामि रे
भविष्यसि यदि त्वं प्रचण्डो महामूढ तदा
बाहुदण्डावास्फाल्य युद्धं करिष्यामि रे।।
चल चल चल मूढ मध्ये न विरम मूढ
पङ्कमध्ये नीच त्वां सहसा धरिष्ये
अरे सर्ववञ्चक प्रपञ्चक खल मूढ
गङ्गाकच्छे पोथयित्वा क्षार-क्षारं त्वां करिष्ये।।6।।

आयातः शुभ्रधारायां प्रविष्टो योपि मनुजः
निपातो नहि तस्य सुरपुरतो भवति रे।
यस्य मुखे तव नाम गङ्गेति खलु पावनं
तस्य मुखे सर्वदो पीयूषं वहति रे।।
स्पृष्ट्वा तव पुण्यतोयं स्पृशति वातो यत्रामुं
तस्य कापि चर्चा यमलोके न चलति रे
उड्डीयते यत्र यत्र गङ्गे मातस्तव धूलि-
स्तत्र तत्र पापानामुड्डीयते धूली रे।।7।।

पिहितौ यमपुरद्वारस्य कपाटावुभौ
क्वापि न हि तत्र रक्षपालका विलोकिताः।
तवतीरसेविनो महाव्रतधारिणः
कृत्वा कृत्वा पापभारं सुरलोकेष्वलोकिताः।।
सुजनाः सन्ति सुखिनः पुण्यवन्त उज्ज्वलाः
पतितजनश्रेणयो भवसिन्धुतस्तारिताः
न केनापि ये तारिता गङ्गे त्वया तारिता-
स्तावन्तो न तारा नभसि यावन्तस्त्वया तारिताः।।8।।

प्रवर्तते चतुर्मुखकमण्डलोः सिद्धिरियं
हरिपदपङ्कजप्रतापवीचिवाहिनी
विराजते गिरीशशीर्षमण्डलेऽतिपावने
नरमुण्डमाला यत्र नृणामघहारिणी।।
भगीरथभूपतेर्महारथस्य पुण्यपथे।
जह्नुमुनिजपयोगतपः पुण्यदायिनी।
गङ्गे जनपावनी क्षेमदा वीचिरियं
कलिकालकष्टयमपाशजालहारिणी।।9।।

भाषा भवति भूषिताऽभिलाषा भवति पूरिता
नवकीर्तिवल्लरी च शाखाभिर्विवर्धिता।
आरोग्यं विवर्धते मुखकमलं प्रसीदति।
छलच्छिद्रमहासेना भवति च नाशिता।।
गङ्गे तव नामतो भूयो गुणगानत
आनन्दरसो वर्धते मनसः प्रसन्नता।
पापानां क्षीणता पुण्यानां पीनता
चित्तानां चूर्णता दुर्मतेर्विपन्नता।।10।।

विषमविलोचनं चिताभस्मसेविनं
लोकत्रयनायकं कश्च कथं मानयेत्।
सर्वलोकविपरीतं प्रतिकूलगामिनं स्वच्छन्दं
वेदानां पुराणानां वचनं को धारयेत्
जटाजूटधारी हिमगिरिकूटवासी
महाकालकूटपायी स कथंविधं जीवेत्
प्रेतभूतसङ्गिनं नग्नं भङ्गपायिनं
पृच्छेत् को गङ्गे त्वां यदि स शिरसि न धारयेत्।।11।।



पापानां पङ्क्तयो विलपन्ति गता यत्र तत्र
यमराजवाहिनी च भूयो भूयो कम्पते।
भास्वरे सुरपुरे मनोज्ञदिव्यवीथीषु
दिव्यदेवयानानां सम्मर्दो विवर्धते।
गङ्गे त्वया समुद्धृतविश्वजीवानां
क्षणे क्षणे सेना शिवलोकं संगच्छते।
अर्धजलमासनं दत्वा दत्वा दिवानिशं
शचीपतिर्व्यस्तः श्वासं नेतुं न शक्नुते।।12।।

क्रूराः कलङ्किनो दुष्पथगामिनो
रेणुपथं याता कति कति न हि तारिताः
विनैव प्रयासं सिद्धिं प्रयाता जन्म
यमदूतानां त्रासादतिदूरं प्रापिताः।
पुस्तकं लेखनीं कर्म कृत्वा दूरतः
चकितः प्रेतनाथः शोचत्येकान्ततः।
ख्यातानां पापिनां क्रूराणामपराधा
गङ्गाया धूलीभिर्धूलीषु मेलिताः।।13।।

गङ्गे तव यावद् वीचिमेकां निभालये
तावल्लक्षसङ्ख्याका भवन्ति तव वीचयः
त्वत्तो वरमेकं याचितुमिच्छामि यावत्
समुपस्थिता अग्रे तावद्वरदानपङ्क्तयः
यावन्ते वर्णयामि गुणानां कलामेकां
सम्मुखमायान्ति ते कलानां कोटयः
यावत्त्वया तारितस्यैकस्य वदामि यशस्-
तावत्त्वया तारिता भवन्ति भक्तकोटयः।।14।।

गङ्गे तव तीरे मृतस्यैकपापिनः
कोपि गतस्तत्र गतिमद्भुतां विलोकयति।
वैकुण्ठादागतो यावत्तं वैकुण्ठपति-
र्गरुडे धृतहस्तः स्वलोकं नेतुं शोचति।
चतुरश्चतुराननः आशु हंसवाहनो
ब्रह्मलोकं तं नेतुं यावदभिवाञ्छति
तावद् वृषवाहनो वृषभ आरोप्य तं
शिवलोकमानीय हृदि प्रसीदति।।15।।

भुवनत्रयस्य किमियं शृङ्गारमाला
किं वा तीर्थसन्दोहः पुण्यो भारतस्य।
अतिशयपुण्यमयी देवसिन्धुधारा त्वियं
यद्वा शुभ्रा दुग्धधारा सुरभेः स्तनस्य।
भगीरथस्य भूपतेर्यशसः पताका यद्वा
प्रत्यक्षं प्रमाणं यद्वा जह्नुभजनस्य
हिमांशोरंशुधारा पृथिव्यामुतानता
यद्वा ध्वज उच्छ्रितः पुण्यानां गणस्य।।16।।

दृष्ट्वा क्षीणं निजबलं पापिजने यमराजः
शरणं गतो गङ्गां याचते पुनः पुनः
श्रेष्ठानेव स्वीकुरु तुच्छानथ दूरीकुरु
कृताञ्जलिः प्रार्थये देवि त्वां पुनः पुनः।।
शिवाश्रयं गता यदा स्वमूर्धनि दधार स।
श्रेष्ठाश्रये कीर्तिश्च विवर्धते पुनः पुनः।
तुच्छेभ्यो ददासि चेन्नारायणरूपं यदा
तेषामेव चरणौ क्षालयितासि पुनःपुनः।।17।।



पापिपापपङ्क्तयो विलपन्ति पथि पथि
दीप्तिर्विवर्धते प्रतिवीथि धर्मिणाम्।
रोगिणां रोगा प्रपलाय्य दूरं गता।
विद्युद्विपातोऽभवद् दुःखेषु च दुःखिनाम्।।
यस्माद् दिवसाद् गङ्गामानयद् भगीरथः
कामाः प्रपूरिता अपारा देहधारिणाम्।
तस्मादेव दिवसाद् यमराजराजधानी
विक्रीते ध्वस्तेव दृष्टा विश्ववासिनाम्।।18।।

विना दानं जपं यज्ञं विना तपो विना ध्यानं
त्रिषु लोकेषु समुन्नतिं महतीं चेदिच्छथ
स्वीकुरुत यद् वदामि कर्णे चाथ कुरुत
मषीपत्रे चादाय लेखिन्याथ लिखत।।
उक्त्वा श्रुत्वा लिखित्वा गङ्गेति पुण्यं नाम
तारयत गोत्रजान् स्वर्गं तान् प्रापयत
श्रुत्वा पुण्यं शतगुणं स्वीकृत्य सहस्रगुणं
लिखित्वा लक्षगुणानुक्त्वा च कोटिगुणं कुरुत।।19।।

शारदघनतुल्यच्छटा सौधवच्छुभ्रच्छटा
हिमाचलभूमिरिव दिव्यच्छटा राजति।
क्षीरनिधिसन्निभा लज्जेव विशुभ्रपटा
देवानां प्रासादवत् पुण्यदा तिष्ठति।।
विशुद्धशुभ्रविग्रहा विष्णुप्रिया देवनदी।
चारुवीचिचञ्चला दिवानिशं धावति
क्षणे क्षणे नवा नवा क्षणे क्षणे दिव्यच्छटा
क्षणे क्षणे पापहरी मनोहरा दीव्यति।।20।।

..........................................................
सर्वदा शीलमयी वेदेषु गीयते
अकथनीयसाधुता साधूनामतिप्रिया
सर्वेषु समरूपा दयामयी राजते
पुण्यं प्रकाशयति नीचतां नाशयति
प्रत्यक्षेव वीरता धरणौ धार्यते।
यत्र यत्र यमदूता धावन्ति भयावहा
तत्र तत्र गङ्गाया दुन्दुभिर्दीयते।।21।।

गङ्गेति दिव्यं नाम जगाद कोपि पातकी
तेजोमयं रूपं तस्मै ददौ देवसरिता।
कृतप्रणामा देवा बहवो निजयानस्था
निजं निजं धाम नेतुं नम्रास्तमुपस्थिताः।।
व्याकुलान् विलोक्य तान् आह न विभीत देवा।
अन्यत् किञ्चद् वाञ्छामि भवत न हि चकिताः।
इन्द्रं निजगाद स नेन्द्रलोकं यास्यामि
शैवं वा विष्णुलोकमिच्छामीति सत्यता।।22।।

प्रत्यक्षं नेन्द्रस्य दृश्यतेऽत्र शुभं यशो
गङ्गा यशो धाम धाम विस्तृतं राजते।
श्रुतं देवदेवस्य देवलोक एव दर्शनं
सैषा देवगङ्गा त्रिषु लोकेषु प्रकाशते।
देवराजो याचितो सङ्कोचाद् ददाति किञ्चि-
दयाचितं ददात्येषा सर्वत्र प्रशंस्यते।
पूरयति कामना इह लोके परत्र चाथ
कामदः कामतरुर्देवगङ्गेति गीयते।।23।।



सत्यानां सारमाला वेदानां विचारमाला
भगीरथस्य भाग्यमाला प्रकृष्टा नरेशस्य।
जह्नुमुनितपोमाला योगिनां जपमाला
स्वच्छा या स्वात्ममालाऽनादेर्ब्रह्मवेषस्य।।
सत्यं वदामि चैषा पुण्यानां प्रमाणमाला
गङ्गाया धारा घनमालेव घनेशस्य।
सद्गुरुज्ञानमाला ज्ञानिनामभिमानमाला
ध्रुवस्येयं ध्यानमाला मौलिमाला च महेशस्य।।24।।

ज्ञानेषु ध्यानेषु निगमनिदानेषु
न लभ्यते कथं हरिर्बहुधा हृदि ध्यायते
सत्वरं प्रत्यक्षे जायते कदापि खलु
सद्वृत्तानामग्रे स प्रत्यक्ष इति कथ्यते।।
इन्दिराया मन्दिरमानन्दं श्रूयते
तत्र भवबन्धबाधा कथं तत्र गम्यते।
नहि वेदवृन्देषु न च क्षीरसिन्धुषु
किन्तु गङ्गाविन्दुषु स गोविन्दो लभ्यते।।25।।

नीरस्य समीपे रेणुरञ्जिता रम्या तटी
नवा नवा ज्योत्स्नापटीव विद्योतते।
गङ्गावारिभिश्चञ्चलः कल्लोललोको
रासमण्डले नृत्यं वितन्वन्निव शोभते।।
विहङ्गानां वाणी वीणारागरञ्जितेव
तरङ्गानां संदोहो नृत्यमग्न इव भासते।
पापानामन्धकारः क्वापि नाक्षिगोचरः
शरत्कालचन्द्रिकेव गङ्गाधारा भ्राजते।।26।।

आशान्वित आगतो मातस्तव पादयो-
र्दुःखानां पुञ्जाः क्वापि विपिने पलायिताः।
कुरोगाणां संघातास्त्वरया पथि चलनात्
पुनः पुनर्भूमिं प्राप्य कण्ठरोधाद् विनिपातिताः।।
प्रवञ्चका दोषा हृदि दुःखदा दरिद्रता
चित्तानां पाशाश्चाविमुक्ता एव मोचिताः।
आगच्छामि तव तीरमहं यावद् गङ्गे मातस्
तावत् क्वापि पापपुञ्जा मध्य एव लुण्ठिताः।।27।।

योगेषु च भोगेषु संयोगे वियोगेषु
रोगेषु रसेषु च न गङ्गां विस्मर रे।
पुण्येषु पत्तनेषु शैशवेषु विषयेषु
दोषाणां मार्गेषु च गङ्गामेव गाय रे।।
बान्धवेषु वैरिषु व्यथासु वंशवालेषु
यात्रासु संग्रामेषु गङ्गामेव स्मर रे।
सौख्येष्वथ शोकेषु कीर्तिष्वाधिपत्येषु।
गङ्गागङ्गेति तपन्नाम यापय निज जन्म रे।।28।।

भागीरथीतीरे विशालं तु भुजङ्गमं।
वैनतेयो वीक्ष्य तं भक्षयितुं पारं गतः।
चतुर्भुजरूपः स बभूव नागो भाग्यवान्
तत्क्षणं पापतापपुञ्जाश्च क्षयं गताः।
प्रशंसति शारदा स्तौत्यथ नारदो।
महेन्द्रयमवरुणैः कुबेरः समीपं गतः।
गङ्गाया वारिणः पुण्यप्रभावेण
सोप्यहिर्गरुडस्य स्कन्धयोर्निधापितः।।29।।



न कासे न कार्पासे न कुमुदे न च कुन्दे
न कीर्तौ न च कर्पूरे न च श्वेतकन्दे।
हिमेषु न हंसेषु मृणालेषु न तन्तुषु
न च चन्द्रमुखीहासे न वा वज्रमणिखण्डे।।
यावती छविरस्ति गङ्गानां तरङ्गेषु
न तावती क्षीरेषु न च क्षीरनिधिवृन्दे।
मालतीषु मल्लिकासु न च चैत्रचन्द्रिकासु
चन्दने न हि चन्द्रचूडे न च पूर्ण चन्द्रे।।30।।

# अनेके समागमाः (More interviews)*

## (क) काष्ठकारः (The Carpenter)

अवशेषयितुं किञ्चित् काष्ठं
त्वं चेद् वाञ्छसि तर्हि यतस्व,
न त्वं तक्ष्णुहि वर्गाकारं
समद्विबाहुत्रिभुजं वापि।।1।।

न त्वं तक्ष्णुहि वर्तुलमेतद्
वयस्य मानय सम्मतिमेताम्
कर्तुं यदि शक्नोषि निर्भरो
यतमानः क्रासाकृत्यां कुरु।।2।।

## (ख) रजकी (The Washer Woman)

रक्तबिन्दुदिदृक्षाभिः क्षौमवासो गवेषितम्
एकस्मिन् पार्श्वके तत्र लक्षितं लक्ष्म पीवरम्।।1।।

वासःखण्डं समानीय सामान्ये प्रस्तरे दधौ
मया वक्षःस्थलं चापि सप्रयासं समाहितम्।।2।।

निरन्तरप्रयत्नेन प्रक्षालनपरायणा,
अयते पूयसंक्रान्तीरपाकर्तुमहं हठात्।।3।।

*ग्योवन्नी रैबॉनी GIOVANNI RABONI (ITALY)



## (ग) शल्यचिकित्सकः (The Surgeon)

नवप्रहारैश्चिरविस्तृतं क्षतं
न कोऽपि तत् पूरयितुं क्षमः स्यात्।
तारुण्यकेऽस्त्रैः परिपीडितो भवे-
दशीतिवर्षोपरतोऽपि मानवः।।1।।

न चेह केचिन्नियमाः सनातना
दृष्टाः पृथिव्यां प्रभवन्ति कुत्रचित्
यत्नैर्निजात्मानमवन्ति ये जना
भवन्ति ते पूज्यतमाः पुरोहिताः।।2।।

केषांचिदेषां भवतीह निर्बला
दृष्टिर्विशालाऽपि न वीक्षितुं क्षमा
अन्तस्तले याश्छुरिकास्तलस्पृशो
धाराश्च तासां सततं बहिर्मुखाः।।3।।

## (घ) भविष्यवक्ता (The Fortune Teller)

दिनं समायास्यति तद्धि सत्वरं
नासासु यस्मिन्नुपनेत्रधारिणाम्
चिकित्सकानामपि कीर्तिशालिनां
वारः प्रयातुं समुपैष्यति स्वतः।।1।।

पुरोहिता रोचितमार्जनीका
अन्तं गमिष्यन्ति रणे हया इव
शेषाश्च तेषां विषयेष्वनेकधा
वार्ताः करिष्यन्ति पृथक् पृथग् जनाः।।2।।

दिनं समायास्यति तद् ध्रुवं यदा
वार्तानुलीना अपि मृत्युदर्शिनः
विचिन्तयन्तः पुरतो मृतानहो
न तान् स्मरिष्यन्ति कदापि ते पुनः ।।3 ।।

## ( ङ) सूपकारः (The Baker)

नाहं कदापि कस्यापि मानयिष्यामि मन्त्रणाम्।
किमस्ति मम कर्तव्यमिति जानामि तत्त्वतः ।।1 ।।

मात्रा गोधूमचूर्णस्य जानामि कियती भवेत्।
न चात्र परिशेषाय दृश्यते किञ्चिदेव हि।।2 ।।

समुत्थास्याम्यहं प्रातर्यथापूर्वं न संशयः।
व्यावहारिकमेतद्धि समाधानं न वस्तुतः।।3 ।।

मृतकानां चन्द्रहासो भविष्यामि स्वजीवने।
वीक्षमाणो जलं भस्म शिष्याहंकारमेव च।।4 ।।

## ( च ) गृहकक्षः (The Apartment)

एकं वासः प्रपदीनं वै
निधाय देहे सोऽस्तव्यस्तम्।
गृहे यापयति दिवसान् रात्रीः
कथयन्त्येवं नितरां लोकाः।।1 ।।

शुद्धे वायौ बहिरागत्य
भ्रमणं कुरुतामनामयाय।
अन्यथा च ते स्नायुबंधनं
यास्यति शैथिल्येन जडत्वम्।।2 ।।



यथापूर्वमुपविष्टो गेहे
श्रुत्वा स्मित्वा मन्दं मन्दम्।
तत्प्रतिकारं कुरुते नूनं
कथयन्त्येवं नितरां लोकाः।।3 ।।

लघुप्रकोष्ठो यथा कन्दरा
गाढः श्लेष्मा यथा जरायुः।
पुस्तकानि तान्यपि सहस्रशो
यानि धूलिभिः खलु मलिनानि।।4 ।।

कश्चिन्नैव पठिष्यति यानि
कोऽपि न यान्युच्चालयिष्यते।
परिमितमावरणं किल सर्व-
मन्तर्हृदयाद् दूरय शीघ्रम्।।5 ।।

प्रदूषितं ननु वातावरणं
पुष्परागैराशु सुवासय।
त्वचं छिन्धि खल्वनावश्यिकां
क्षतप्रपूर्त्य बन्धय चैताम् ।।6 ।।

मन्दं याति गवाक्षं श्रान्तो
द्रष्टुं हिमवर्षाणां प्रकृतिम्
घनान्धकारे दरप्रकाशं
बालविपर्यासञ्च वैश्वकम्।।7 ।।

**( छ ) बर्बरप्रकृतिः** (The Career of The Brute)

अकिञ्चनं त्वं सहसा ब्रवीषि
दुष्टं पशुं वा तदु चिन्त्यमेव।
एवं समस्याः कतिधा जगत्सु
कियच्च वा सन्तमसं न जाने।।1।।

बहूनि वस्तूनि भवन्ति भूमौ
नामानि दातुं कठिनानि येषाम्।
नाम्ना हि यद्वत्कथितोऽयमज्ञ-
स्तथैव नाम्ना दिवसश्च कोऽद्य।।2।।

सङ्केततो निर्णय आप्यते चे-
च्छलेन कश्चिद् धरतां सुबालाम्।
मुसोलिनीकञ्चुकसारिकाया
मालां जरत्याः कुरुतां गलेऽन्यः।।3।।

नास्य कश्चित् प्रतीकारो विद्यते जगतीतले।
न चात्रास्ति प्रभुः ख्रीष्टो यः समर्थो भवेदिह।।4।।

**(ज) वामनः** (Tiny Little Person)

आहूतोऽसौ चालयत्येकमेव
कर्णं मन्दं विष्टरे स्वे शयानः।
सुप्तः स्वप्ने स्वर्गतायाः स्वमातुः
स्तन्यं चूषत्येष तूष्णीं स्तनाभ्याम्।।1।।

सुखेन खादत्यथ पिष्टकानि
काफ्योषधेर्वाञ्छति निष्कुटं च।



स स्वेददे प्रावरके तथौर्णे
पञ्चाङ्गुलीः सारयते चिराय।।2।।

स पत्रकैरास्तरणं विधाय
शेते सुखं पुस्तकसंस्तरेऽपि।
मञ्जूषिकायामुत पेटिकायां
सुखानुभूतिं लभते विशेषात्।।3।।

चलत्कपोतान् प्रति कम्पमाने
स्पर्शेक्षणे तस्य हरिद्रुची स्तः।
स मत्कुणान् दष्टुमना विलेढि
श्मश्रूणि चेष्टाविवशो निजानि।।4।।

## कुब्जा*

आदाय चन्दनमहं कुसुमानि चैव
कंसं प्रति प्रचलिता नृपतिं स मार्गे।
जोषं जगाद सुभगे यदुनन्दनोहं
स्थालीं कमर्चितुमहो नयसे हसन्ती।।1।।

रम्यं ततोद्भुतमिव स्मयते स्म धीरो
यत्सारवच्छशिखी चरतो नु शून्ये।
धन्या धरा गुरुभरं नृवरं दधौ सा
यद्वा स्थिराश्रितपदा विवरं विशन्ती।।2।।

क्षीणं च तत् कटितटं नववस्त्रनद्ध
मास्कन्धमालिचिकुरास्तदुरश्च पीनम्।
रत्नानि वै कनककान्तिमयोत्तरीये
पार्श्वस्पृशौ खलु भुजौ सुभगौ विशालौ।।3।।

गण्डत्विषा विलसितौ श्रुतिकुण्डलौ द्वौ
रम्यं विलोक्य गहनं चिबुकं च तद्वत्।
चित्तं चलं चरणयोश्चिरकिङ्करं मे
गत्वा पपात नृवरस्य तु नन्दसूनोः।।4।।

औष्ठौ न तौ खलु विदीर्णमुरः प्रियाया
हारो न वै सुमधुरा विलसन्ति हासाः।
नासां विलोक्य कुटिला ऋजवो भवन्ति
दृष्ट्वा मुखं शतदलं च मुधा विभाति।।5।।

* मैथिलीशरणगुप्तस्य द्वापरात् पृ.101



प्रौढा पुरा तदनु हन्त बभूव बाला
सख्यः क्षणादघटितं घटितं विचित्रम्।
नीलाम्बुजाक्षिणि बभौ तडिदुज्ज्वला दृग्
ज्ञातं व्रजेष्वटति विश्वपतिर्मुरारिः।।6।।

श्यामच्छविः किमटतीह जगत्सुराम-
श्चापं विना कथमसौ सखि कंसपुर्याम्।
वक्रे भ्रुवौ समवलोक्य विनिश्चितं मे
सेयं विवर्तयति दृक् खलु विश्वमेतत्।।7।।

मूर्तिर्निजस्य मनसो घटितास्य मूर्तौ
नारायणो नरतनौ किल खेलतीह।
मूर्ध्ना निधाय मुकुटे तु मयूरवर्हं
पीताम्बरं च परिधित्सति वा नृसिंहः।।8।।

आयाति चेत्तनुधरा यमुना तरङ्गैः
साम्यं भवेत् किमपि तस्य तदङ्गभङ्ग्या।
सेयं छवेः प्रतिकृतिश्च चमत्कृतिश्च
स्वच्छा जगत्यनुपमा सचराचरेस्मिन्।।9।।

ज्योतिर्मयो जलधरो ननु कामरूप
आस्ते सदा सहृदयः सदयोऽभयश्च।
ओजोयुतः सुललितः किमु वा गभीरो
भद्रप्रदश्च हरितश्च स भाद्रमासः।।10।।

राधा स्वयं कलयते रणकङ्कणं ते
काले भवेच्च मिलिता जयनिश्चया सा।
सेवेय हन्त चरणावनिशं नु तस्या
एकान्ततो मिलति किं स तथाकृतेपि।।11।।

दृष्टौ पुरः स विबुधोऽद्य समागतो मे
दैत्यार्चने तु समभूवमहं प्रसक्ता
उत्कर्तुमेव न शशाक करौ यदाहं
नत्वार्पयं चरणयोः सुमचन्दनादि।।12।।

धृत्वा शिरश्च चिबुकं च बुधः कराभ्यां
शक्त्योच्चकर्ष निपुणो मम देहयष्टिम्।
पादौ कृतौ च पदयोर्हसतोच्छ्रितौ च
कुब्जा बभूव सरला च शुचिस्मिताऽहम्।।13।।

विद्योतिताथ चपलेव शिरासु देहे
स्पन्दान्नवाच्च निखिलं च नवं नवं मे।
मन्दं स्पृशंश्च चिबुकं स्मितवान् स मायी
तस्थावहं तु लिखितेव नु विस्मितेव।।14।।

नाहं तथान्यवदिदं तु जगद् बभूव
शक्रस्य नन्दनवनं विततं समन्तात्।
यो वै रसो जगति तस्य तु निर्झराणि
मेऽन्तर्वबुः सरसिजान्युन्मीलितानि।।15।।

तादृग्विधो न कदापि मया व्यलोकि
स्वप्नस्तथाप्यवितथः स बभूव मह्यम्।
ग्लानिं विहाय मनसो ददृशे समन्ता-
दात्मानमेव नितरामतिसावधाना।।16

आगत्य हन्त मिलितास्मि पुनः कदापी-
त्युक्त्वा हसन् प्रचलितः स निरीक्षमाणः।
दूरे दृशः पथि जगाम यथा यथासौ
सूक्ष्मं विवेश मनसीव तथा तथासौ।।17।।



दृष्टा धरैव खलु पृष्ठभरादधस्ता-
दुच्चैः स्थिरं गगनमद्य विलोकयामि।
सा श्यामता नवतनौ यदुनन्दनस्य
सा चैव नीलहरितेषु च पल्लवेषु।।18।।

तेष्वेव वा कुसुमवद्विक्सेज्जनोय-
मेतावदेव रुचिरं खलु काङ्क्षितं मे।
तस्यच्छविं सुविमले सलिलेऽनिले वा
गन्धेऽनले गतिबलेषु विलोकयामि।।19।।

एकस्तरङ्ग इह वह्निकणः स एकः
श्वास स एक इह तस्य चकास्ति लोके।
आह्लादयत्यखिलमेव चराचरं स
वेणोश्च तस्य निनदः पुरुषोत्तमस्य।।20।।

सर्वं च तन्मयमभूज्जगतीतलं मे
कंसाच्च का हि कठिनादधुना बिभेति।
प्रत्यागता भवनमेव निजं तदानीं
लोका विलोक्य चकिता परिवर्तनं तत्।।21।

नूनं परं रुचिकरं विजनं च मह्य-
मासीत्तदा मनसि किञ्चन चिन्तनार्थम्।
आत्मा मया निपुणया निजविम्बरूप
एतावता च समयेन निरीक्षितः किम्।।22।।

दातुं सुधीः प्रचलितो न च संग्रहीतुं
वीरः पराक्रमयुतः परमार्थविज्ञः।
कंसे मृते स च ददौ नगराधिपत्यं
मातामहाय सगुणाय च दुःखिताय।।23।।

आश्वासन्नरवरं नृपमुग्रसेनं
दुःस्थं स्वदुष्टतनयाचरणेन वृद्धम्।
भक्त्या पुनः स्वपितरावमिलत् स गाढ-
मानन्दयंश्च वचनैरमृतोपकल्पैः।।24।।

आयातुमेव निजगाद नरोत्तमः स
राधास्मि किं नृपसुतेव समादरार्हा।
कुब्जा तथाप्यनुचरी च गता स्वयं स्याद्
बाधा च का मम भवेत्तु तथाकृतेऽपि।।25।।

किन्त्वाकुला व्रजवने व्रजभूमिराज्ञी
तां वेदनां स्वभवनेऽनुभवामि दासी।
वर्षेण केवलमहं व्यथिता यदीत्थ-
मेतावता चिरवियोगवती कथं स्यात्।।26।।

कुब्जाऽभविष्यदनुगा यदि चाद्य तस्या
गत्वाऽग्रहीष्यत् पदावरुणौ शरण्यौ।
कायं तथा परिणतं क्व नयेय रम्य-
मत्रागताय भवितास्मि निवेद्य पूर्णा।।27।।

दत्ता तनुर्न खलु शीलमपीह दत्तं
कर्तुं क्षमा न हि तथाभिलषामि यद्वै।
नायाच्च स प्रवसनान्नयनाम्बु किन्तु
लावण्यसिन्धुरससारमिवानिनाय।।28।।

निन्दामि नैव नियतिं पिबती त्विमानि
किन्त्वातुरं स्वहृदयं खलु किं करोमि।
जाता निशा समुदियाय निशाधिनाथ
स्तद्वा विलोक्य हृदयं स्फुरतीव शीघ्रम्।।29।।



रात्रिर्भवेयमथवा स भवेत् सुधांशु-
स्तारा भवेयमुत चेत् स भवेत्तमिस्रा।
प्रातर्बभावुरसि सा मुखरास्ति भृङ्गी
हंसस्य सा विकचिता नलिनी प्रसन्ना।।30।।

दूरं विहायसि गता नितरां सुनीले
नीहारवन्निपतिता विगताश्रयाहम्।
शोभेत वारि तु नखेषु च तस्य चैतत्
क्वाहं लभेय चरणौ हि समर्हणार्हौ।।31।।

द्वारं सुसज्जितमहो परितो वृथैव
नालोकितं च हृदयं स च यत्र शेते।
सुक्षालिता तनुरियं सुविभूषिता च
किन्तु श्रुतः श्रुतिपरः परमेश्वरः सः।।32।।

प्रज्ज्वालिताः किमु वृथा घृतवर्तिदीपा
नात्रागतो यदि स वै नवनीतचौरः।
अन्तः परन्तु नवसान्द्रपयोदनील
आच्छादितो हृदि विभाति मनोभिरामः।।33।।

स्नेहं विना समुपयान्तु लयं प्रदीपा
जागर्ति किन्तु दृगियं सजला निशायाम्।
म्लानानि सन्तु कुसुमानि न चात्र चिन्ता
रागे परे मृदु मनस्त्वनुरञ्जितं मे।।34।।

यद्याव्रजेदतिथिदेव इहाद्य गेहे
प्राप्स्याम्यहं स्वशिरसा पदयोः प्रणम्य।
स्नेहात्तनुः सुरुचिरा मम तेन दत्ता
प्राणानपि प्रियतमान् क्षणशः प्रदास्ये।।35।।

अन्तः स मे न हृदय स्फुर नैव बाहो
मृत्युर्भवेन् मिलनवान् सफलः श्रमः स्यात्।।
भ्रान्तिक्लमौ प्रभवतां परिवर्तनं वा
नाट्यं च निर्वहतु नाट्यपशान्तिसन्धिम्।।36।।

क्रान्तिर्मृता कुरु न च श्रममेहि नाथ
प्रेम्णा युतो मृदु शनैर्व्यजनं करिष्ये।
मुक्ता विकीर्य परितः श्रमवारिविन्दून्
भक्त्या युता निपतितान् खलु संग्रहीष्ये।।37

राधा भवेन्न कुपिताऽत्र ममाधिकारे
दासीं प्रतार्य न हि तुष्यति कापि राज्ञी।
योषिद् व्रजस्य ललनेयमपीह योषि-
दात्मार्पणे तदुभयोः सममाधिपत्यम्।।38।।

स्त्रीत्वेन का न मिलिता पुरुषेण सार्धं
स्त्रीत्वं त्वयैव मम जीवितमद्य मन्ये।
व्यालो बवन्ध स कटिं न च कुब्जता मे
मन्त्रेण केन बलवानपसारितश्च।।39।।

मां बाधते विरहवृश्चिक एत्य दुष्टो
मा पश्य गारुडिक कौतुकमद्य दूरात्।
एष्याम्यहं च सविधे यदि नागतस्त्वं
द्रक्ष्यामि कोपकुटिलामपि तां भ्रुवे ते।।40।।

एवं वदिष्यति स मामपि धैर्यहीने
दासी किलासि न कथमाचरसि त्वमेवम्।
अप्यस्मि साऽप्यनुचरी सततं मुरारे
दासी तवैव तव चास्मि परैव दासी।।41।।



कि त्वां गतं धनमिवेह विचिन्तयेये
निर्माय वा मम तनुः कथमर्पिता ते।
त्वां प्राप्य नाथ हृदये करुणैकसिन्धुं
रोमोद्गमात्तनुरियं जडवद् भवेन्मे।।42।।

प्रस्वेदविन्दुसदृशा असवः प्रियाश्च
विद्राविताश्चरणयोः सततं वहेयुः।
आकर्ण्य पर्णचलनं हृदि वेपथुर्मे
कालः प्रयाति परमध्व-निरीक्षणेन।।43।।

स्वप्नं च मे समुपहृत्य गता हि निद्रा
जानीहि सत्यमिदमत्र वदामि नम्रा।
आगच्छ सत्वरमिहाद्य नु राजराज
जागर्मि संततमहं त्वभिनन्दनाय।।44।।

रात्रिं दिवा कृतपतत्रयुगा समुत्का
सूक्ष्मा परा स्मृतिरिवेह समुड्डयेहम्।
नूनं त्वयैव मिलनाय भवामि नाथ
पर्याकुला सततमेव निजाद् वियुक्ता।।45।।

अत्रैव तिष्ठसि कुतोपि च कौतुकं मे
कोष्ठे प्रविश्य वद निर्दय वर्तसे क्व।
पूर्णा कथा न भविता व्यथया विना ते
योगी भवेः खलु ममासि परं वियोगी।।46।।

लोका भवन्त्वगणिताः परितो भवन्त-
मेकास्म्यहं विजनता तव लोकनाथ।
एतावती मममतिर्यदुराजराज
ह्येतावती मम गतिर्वत वर्ततेऽल्पा।।47।।

# प्रावृषि रुचिरः पर्वतदेशः *

प्रावृषि रुचिरः पर्वतदेशः
प्रकृतिः क्षणे क्षणे नववेषा।
एते नगा मेखलाकारा
विकसितनवकुसुमैरनिमेषाः ।।1।।

उपत्यकाया महातडागे
दर्पणतुल्येऽमितकैलासाः।
अन्तर्वारि रूपमुत्तालं
संवीक्षन्ते स्फुटितोल्लासाः।।2।।

गिरिगौरवगाथां गायन्त्यो
रमणीयाः कलमुक्तामालाः।
स्नायुबन्धनं खलु मदयन्त्यः
प्रवहन्तीमा निर्झरमालाः।।3।।

पारदसितपक्षौ धुन्वानः
पश्य पर्वतः सहसोड्डीनः।
समे निर्झरा ध्वन्यवशेषा
आकाशो धरणौ प्रविलीनः।।4।।

सभयाः शाला विविशुरनन्तां
ज्वलितं सर उत्थित इव धूमः।
इन्द्रो जलदयानमधिरूढः
शक्रजालमातेने सूक्ष्मः।।5।।

*सुमित्रानन्दनपन्तस्य 'पर्वत में पावस' कविताया अनुप्रयोगः।



एवं प्रकृतिचित्रवशवर्त्तिनि
मम हृदये त्वद्भुतमिव चित्रम्।
शैलमेव निजगेहं मनुते
स्मृतिः कन्यका शैशवमित्रम्।।6।।

## कंसः *

कंसस्याचरणं प्रायः प्रशंसन्ति जना इह
तस्मादाचरणं तस्य गुप्तकाव्यादनूद्यते।

एको नियन्ताऽस्मि निजात्मनोऽहं
किं कर्तुमीशा नियतिर्वराका।
स्वकर्मभीरोर्भवतीह पाप-
माकुञ्चनं पूर्णतया जनस्य।।1।।

श्रेष्ठश्च धर्मः खलु वह्नि-धर्मो यदापतेत्तत् प्रकरोति भस्म
उड्डीयतेऽम्भो दिवि वाष्पभूतमङ्गारतां याति च गोमयं वै ।।2।।

दृष्ट्वा धरां धरसि चेच्चरणौ विमूढ!
वह्नौ निपत्य निजकर्मगतिं भजस्व।
यास्याम्यहं कठिनचर्मनिगूढपादः
प्राणानवन्तु कुशकण्टककीटतुल्याः।।3।।

साम्राज्यमस्ति न मृदा न तथेष्टकाभिः
कङ्कालराजिरिह राजति शोणिताक्ता।
चित्राणि भित्तिषु लिखन्तु नृपा दयाया
धर्मस्य वा सुकुटिला जनवञ्चनाय।।4।।

वीक्ष्याश्रु चेद् द्रवसि चक्षुषि दुःखितस्य
ज्ञातं मृदा विरचितः सरलोऽसि साधुः
अङ्कं गता भवति कोमलताऽऽकृतिश्चेत्
कर्मण्यता दृढतमा प्रविशेत् कथं सा ।।5।।

* मैथिलीशरणगुप्तस्य द्वापरात्।



रे बन्धनानि खलु निर्बलबन्धनाय
शक्तिर्यदा भवति खण्डयताद्य तानि।
भो बह्मविद् वदसि किं वितथं विनिन्द्य !
त्वं ब्रह्म वा तव वृथा ह्युभयं न गण्यम् ।।6।।

न्यायः परो जगति वै सफलोऽस्ति मात्स्यो
न्यायोऽपरो भवति निर्बलमृत्युपायः।
तूष्णीकतां कलय याहि च बौद्धबुद्धे
पौरो वनेच्छुरिव भासि वनेचरस्त्वम् ।।7।।

नारायणः खलु नरः श्रुतिशास्त्रगीतं
ब्रह्मास्म्यहं प्रवचनं शृणु मौन एव।
श्रीमानहं च भगवान् बलवानशक्ता
अस्मत्कृतान् प्रकृतयो नियमान् भजन्ति ।।8।।

कृत्वा स्वकर्म बहुजन्मपरिष्कृतं किं
नाहं चराचरपतिर्भवितुं समर्थः।
कर्ता नु को भवति मे स्वयमस्मि कर्ता
सिद्धिं न मेऽभिलषितामिह कोऽपि हर्ता ।।9।।

नश्येन्न यष्टिरुरगश्च न यातु रीतिः
किन्त्वस्ति कापुरुषता खलु कूटनीतिः।
त्रुट्येच्च यष्टिरथ शक्तियुतौ भुजौ मे
वेष्टेत चेद् गजपतिः शतशः स नश्येत् ।।10।।

नग्नां स्वसृष्टिमकरोन्निपुणः कलावान्
दृष्टा जनैः प्रथममत्र तु नग्नतैव।
गुप्तं न मे किमपि सम्मुखमेव वीक्षे
लक्ष्यं च मे सममनावृतमेव सत्यम् ।।11।।

एकं मिषं समुचितं कथनाय लोके
नग्नाः प्रयान्ति सततं प्रकृतिं निजां वै।
कश्चित् समर्थयति वारयतीह कश्चिन्
मोदध्वमत्र पिबताथ च शासने मे ।।12।।

बाधेत यः स्वसृपतिर्जरठः पिता वा
कारां गतः स यतवाङ् निगडान्वितः स्यात्।
दीनेव किं भ्रमसि देवकि! सन्निधौ मे
राज्ञां निजो भवति को हि तदाश्रितो यः ।।13।।

भिन्दन्तु देवबलये नवनारिकेली-
र्लोका मया शिशुशिरांसि सुसाधितानि।
वेल्लामि नैव सदयः शिशुपालतुल्यः
क्रूरो जरासुतसुतापतिरस्मि राजा ।।14।।

कृन्तेच्छिरांसि फलवत् स हि चन्द्रहासः
सारं हि पौरुषमहो किमु पुण्यपापैः।
उच्चै रुदन्तु कवयो नृपतिर्नृशंस
आकर्णितो न पुरुषः पुरुषार्थहीनः ।।15।।

यस्मिन्नु विश्वसिषि सोऽत्र कथं न हन्यात्
स्वस्रा तथा स्वसृधवेन मृषाऽभ्यधायि।
गच्छागताल्प-बलता करुणेतिनाम्ना
सोऽहं बली यदि च कोपि वदेन्नृशंसम् ।।16।।



# वीरखनिः *

अयि देश भारत त्वं जीवनमसि हन्त जागरश्चापि
परिधिर्नासि धरायाः सलिलस्य वापि निःस्पन्दः।।1।।

न त्वं हरिता भूमिर्न ज्ञानं वापि केवलं भूमेः।
आत्मोत्सवपरिपूर्णः परन्त्वसि प्राणरूपस्त्वम्।।2।।

एषा मृदपि पवित्रा नैव जडा किन्तु जन्मदात्रीयम्।
जीवनदा महनीया नवचेतनयाऽन्विता नित्यम्।।3।।

योऽस्मिञ्जातो भाग्यान्निर्जरनिकुरम्बकाङ्क्षिते देशे।
स मन्यते स्म मनुजः स्वमरणमपि जीवनं पुण्यम्।।4।।

जलमपि जीवनसंज्ञां लभते वीचीभिराचितं सततम्।
इह परिचलितौ चरणौ लक्ष्यमलब्ध्वा न विनिवृतौ।।5।।

वेदानां सन्देशाः पवन-मुखरिताः प्रसारमत्रापु।
लग्नां जडताधूलिं दूरयति विचारवात्या च।।6।।

अयि देश भारत त्वं सदाप्रियो मम सनातनश्चापि।
न हि केवल इतिहासो न च क्रमोऽतीतकालस्य।।7।।

त्वं दर्पणोऽसि विमलः क्षणस्य निमिषस्य वत्सरस्यापि।
त्वं प्रेरणाप्रवाहः शाश्वतचेता भविष्यस्य।।8।।

अतिकठिनेऽपि ग्राव्णि प्राणांस्त्वं प्रतिष्ठापयसि सूक्ष्मान्।
शोणितमुष्णं तेषां शुद्धं धमनीषु वाहयसे।।9।।

* श्रीकृष्णसरलस्य सुभाषचन्द्रग्रन्थाद् भाषान्तरणम्।

भारत वीरखनिस्त्वं जनिहेतुर्मनुजरत्नकोटीनाम्।
यद्भासा सविकासा धरा ऋणवती तथा च मानवता।।10।।

शक्तीनां समुदायो विलक्षणोऽसौ विचक्षणो मतिमान्।
श्रीमानत्र सुभाषो भाषा सद्यः समुदियाय।।11।।

अजनिष्ट स प्रपुष्टः सुचिरं चिक्रीड राजनयखेलाम्।
त्यक्त्वा गतोऽपि दूरे त्वामेवाचिन्तयत् सततम्।।12।।

त्वं पूज्यस्त्वं साध्यस्त्वं चाराध्यो बभूविथामुष्य।
देहश्चित्तं प्राणाँस्तुभ्यं तेनार्पितं सर्वम्।।13।।

गुणगानं मदभीष्टं राष्ट्रमणेः क्रान्तिदेवतस्यास्य।
शक्तिप्रदः स भूयाल्लेखनगतिदः प्रवाहदश्चापि।।14।।



## वसन्तः*

क्रीडासु पुष्पकलिकासु नवे परागे
कच्छेषु कुञ्जलतिकोत्तमनर्तनेषु।
केदार-पङ्क्तिषु पिकेषु पलाशपुष्प-
रागेषु राजतितरां सरसो वसन्तः।।1।।

द्वीपेषु देशधरणीषु दिगन्तरेषु
वीथ्यां व्रजे नववधूषु च वल्लरीषु।
द्वारे वनोपवनकुञ्जलतागृहेषु
गर्वेण राजतितरां सुखदो वसन्तः।।2।।

अन्येव गुञ्जति षडङ्घ्रिततिः प्रमत्ता
सान्या छविर्विटपराजिषु मञ्जरीषु।
अन्यादृशासु नितरां व्रजवीथिकासु
सान्या छविश्छविमयस्य विराजतेऽद्य।।3।।

अन्यादृशः कलरवोऽत्र विहङ्गवृन्दे
सान्या तनुश्च विपिनं च मनस्तथान्यत्।
अन्या गतिस्त्वथ रसो जनरीतिरन्या
व्याप्ते वसन्तदिवसेऽखिलमन्यदेव।।4।।

*प्रसिद्धस्य हिन्दीकवेः पद्माकरस्य ''वसन्त'' कवितायाः संस्कृतानुवादः।

# शरद् *

वाटीषु तालविटपेषु तमालराजौ
वंशीवटेषु यमुनातटमण्डपेषु।
वृन्दावनेषु सरसीषु सरोवरेषु
रासेषु रासवनितासु लतागृहेषु।।1।।

गेहच्छदिःसु वसुधासु कुटीच्छदेषु
नानालतासु ललितासु सुपुष्पितासु।
देहे मुरारिमुकुटेष्वथ राधिकाया
वेण्यां सिता खलु शरद् रुचिरा चकास्ति।।2।।

ध्वानः स काचवलये मधुरो मृदङ्ग-
घोषो घनश्चरणनूपुरजश्च रम्यः।
वंशीरवैश्च मिलितो ललितो लयेन
चेतः समाधिमिव देहभृतां तनोति।।3।।

द्रष्टुं च पारयति यो न स वक्तुमीशो
लोकोत्सवाय विविधा मनसो विलासाः।
ज्योत्स्नाप्रकाश उदिते गगने सुधांशौ
राधास्मितैः सुललितो व्रजकृष्णरासः।।4।।

*पद्मामकरकवेः कविताया अनुवादः।



# भिक्षुकः *

पश्यागच्छत्ययमिह पथा भिक्षुको जीर्णवासा
दीनः पृष्ठे मिलितजठरो भिक्षमाणोऽन्नमुष्टिम्।
यष्टिं गृह्णन् व्यथितहृदयो दारयन् मानवान्तः
पश्चात्तापैः सह परवशः क्षुत्प्रशान्त्यै वराकः।।1।।

शुष्कोष्ठौ द्वौ सह तु चलतो बालकौ क्षीणकायौ
एको हस्तो जठरपिटके धारितो हन्त ताभ्याम्।
अन्यश्चाग्रे कृत इह दयादृष्टिमाप्तुं जनानां
तेभ्यः किं वा ददति विदिता दानवीरा जगत्याम्।।2।।

क्षुत्क्षामास्ते पथि पथिगता तत्र किञ्चन्न लब्ध्वा
पीत्वा पीत्वा नयनसलिलं तोषमेते जुषन्ते।
पत्रोच्छिष्टान् कतिपयकणान् यत्र लेढुं प्रयान्ति
तत्र श्वानो झटिति बहुशो युध्यमाना भषन्ति।।3।।

तिष्ठतात्रागच्छत मम हृदये पीयूषबिन्दवः केचित्।
तव दुःखान्याकृष्य धारयिष्यामि हृदये स्वे।।4।।

*'निराला' कवेः काव्यकौमुदी पृ. 172 ''वह आता'' इतिशीर्षकात् अनुवादः।

# देवि किं तुभ्यं यच्छानि*

मम किं भवति न किमपि च वोढुं सन्ति साधनाभाराः
विफलरोदने वाष्पविन्दवस्त्वामुपहर्तुं हाराः
लोके दुःखैर्भृष्वश्रुषु विफलाः कति प्रयासाः
प्रतिफलितेयं मनोवेदना नैके जनोपहासाः ।।1 ।।

किं तुभ्यं यच्छानि देवि किं तुभ्यं यच्छानि
आनयामि वै तव चरणे किं, किं तुभ्यं यच्छानि .....
लसति महार्हं चलाञ्चलं ते विविधै रत्नैर्जटितं
माधुर्यं चातुर्यं वर्षति सफलैर्यत्नै रचितम्
चित्वा चित्वा समर्पितास्ते कतिधा कविभिर्हारा
पराभवास्तेषां हृदयाणां वाष्पैरिहोपहाराः ।।2 ।।
देवि किं तुभ्यं यच्छानि.............

मम किं भवति न किमपि च सविधे किं तुभ्यं यच्छानि,
स्वयं प्रसारय निजौ करौ त्वं करुणासंप्लुतहृदया
तमोयुतं हृदयं रविकिरणैः कुरु रमणीयं सदया ।।
परिधापय सङ्गीत मालिका एता वक्षसि रचिता
स्तथोज्ज्वले प्रकाशे खेलतु जनताऽखिलभयरहिता ।।3 ।।
किं पुरतः करवाणि ........................
देवि किं तुभ्यं यच्छानि
मम किं भवति न किमपि च सविधे
किं तुभ्यं यच्छानि ? ............

*निरालाकवेः 'देवि तुम्हें मैं क्या दूँ' इतिशीर्षकात् काव्यकौमुदी पृ.171 ।



# द्वारं नाथाऽभय वरद हेऽनावृतं देहि शीघ्रम्*

नीहाराणां सुशिशिरकणैः कम्बलं क्लिन्नमेतत्
शीतस्फीतः प्रवहतितरां गन्धवाहः प्रतीच्याः ।
आर्द्रीभूतः खलु स रुचिरः केशपाशो रजन्याः
द्वार्यागत्य स्पृश रविकरेणारुणेनेव नाथ ।।1 ।।

धूल्या म्लानौ खलु मम पदौ कण्टकाग्रैश्च विद्धौ
भ्रान्त्वा भ्रान्त्वा कथमपि तव द्वारमत्रागतोस्मि ।
नो भेतव्यं तव न मलिनं मन्दिरं संविधास्ये
प्रक्षाल्यैतौ नयनसलिलैरागतोहं विशुद्ध्या ।।2 ।।

पङ्कैः क्लिन्नो यदि मम पदौ नो जुगुप्सा विधेया
मत्तुल्यानां तव पदयुगे नाथ कुत्रावकाशः ।
निश्चेष्यामि स्वपदमनघं पादलग्नस्तवैव
प्राप्य द्वारं तव गतभये नैव हास्यामि नूनम् ।।3 ।।

द्वारं नाथानावृतं देहि तस्माद्
रम्यं रूपं दर्शयानामयं तत् ।
नश्येद् दुःखं तद्रजन्या अपारं
भूयान्नूनं सुप्रभातं ममापि ।।4 ।।

*हिन्दीकवेः प्रसादस्य ''खोलो द्वार'' कवितातः ।

## कीदृशा वासरास्ते*

रम्या नूनं कतिचिदभवन् कीदृशाः वासरास्ते
यत्रावर्षन् नयनसदृशा वारिदा नित्यमेव।।1।।

नीलैः सान्द्रैर्नवजलधरैरिन्द्रचापारुणाभै-
रासीद् व्याप्तं सकलममितं व्योम यत्राद्वितीयम्।।2।।

एतौ नद्या ललितललितौ द्वौ तटौ राजमानौ
कामिन्यास्तावधरमधुरौ चुम्बनायोद्यतौ हि।।3।।

यत्रावर्षन् नवहरितता मालतीवारिविन्दून्
गन्धैर्युक्तान् रुतसहचरान् चातकोच्छ्वासतुल्यान्।।4।।

रम्या नूनं कतिचिदभवन् कीदृशा वासरास्ते
यत्रावर्षन् नयनसदृशा वारिदा नित्यमेव।।5।।

*हिन्दीकवेः प्रसादस्य कविताया अनुवादः।



## मेघानां कृते

कस्याशान्तो मनसि जलधौ वाडवाग्निः प्रचण्डो
वाष्पो भूत्वा तरणिकिरणैस्त्वं मिमीषेऽम्बरं यत्।।1।।

किं खद्योतैः कृत इह सुमैर्दीपकालोक एष
शोकात् कस्माद् भवति नितरां वाष्पवर्षः समाधौ।।2।।

भूरि श्रान्ता इव वनचरा प्रोषिता स्वप्रवासात्
प्रत्यायाता पुनरपि कुतः कारणान् मन्दगत्या।।3।।

कस्यातीत प्रणयजनिता तीव्रतां संप्रयाति
सद्यः स्मृत्या झटिति चपलाकल्पया सा पिपासा।।4।।

# उन्मूलिता वृक्षाः*

त्रोटितान्युपवनसुमानि यन् निखिलानि च ते शुभं कृतम्।
समुन्मूलिता मृदुफलनम्रा विटपा यत्ते शुभं कृतम्।।1।।

समारोपिता नवतरुशाखास्त्वया प्रसिक्ताः शुभं कृतम्।
प्रबलोल्लासैर्जगदिदमखिलं विपरिवर्तितं शुभं कृतम्।।2।।

वयं प्रयामो बालपादपाः यूयं विश्रामं कुरुत।
आयाता इह दिनद्वयाय मिलिताः खलु कार्यं कुरुत।।3।।

दृषद्दृढा उन्नतभूभागा नो सिञ्च्यन्ते दिने दिने।
उपवनविचरणशीलाः पौरा नात्रायान्ति च दिने दिने।।4।।

छित्वा छित्वा नम्राः शाखा विपिनचरा खादन्ति।
बलीमुखास्तरुशाखारूढा उच्चैर्हुं कुर्वन्ति।।5।।

दीनबन्धुकृपया जीवामो वयं बान्धवा हरिताः।
यूयं चाऽगच्छत विचरन्तो वयं सर्वदा फलिताः।।6।।

*हिन्दीकवेः माखनलालचतुर्वेदिनः कविताया अनुवादः।



# पश्य प्रावृट् पुनरायाता*

विटपाश्लिष्टा लवङ्गलतिका
गाढं श्लिष्यति स्नेहासक्ता।
पश्य त्रिविधो वहति मारुतः
धैर्यं धर्तुं नाहमुद्यता।।1।।

संस्पृश्याङ्गं गतः पुरा यः
प्रत्यागच्छति सोयं त्वरितः।
घटा घनानामियमतिघोरा
पुनर्गर्जितुमिहानुयाता।।2।।

मल्लिकासु मधुपा मदमत्ता
मन्दं मन्दं वहति मारुतः।
वेगाद् यान्ति नदा अथ सरितः
दृष्टिर्युवतीनां मदमत्ता।।3।।

दर्दुराः कृतदुन्दुभिघोषा
विद्योतन्ते दिक्षु विद्युतः।
घन जल भवन वनोपवनेषु
वर्षा शोभां पश्यति जनता।।4।।

पश्य प्रावृट् पुनरायाता
नवसमृद्धिभिरियमायाता।
हृदि निदधाना नवाभिलाषा
विद्युद् दीव्यति वारं वारम्।।5।।

*हिन्दीकवेः पद्माकरस्य कविताया अनुवादः।

मेघो वर्षति मन्दं मन्दं
स्नेहः प्रविशति वै प्रत्यङ्गम्।
यवासकल्पं शरीरपिण्डं
दिने दिने परिशुष्यति खिन्नम्।।6।।

अस्मिन् यमुना कूलकदम्बे जातो मधुपानां संवासः।
नित्यं नन्दतनूजोत्पाते व्रजवासोऽयं वह्न्यावासः।।7।।

नायं कामयते पानीयं पापी चातकपोतश्चपलः।
किन्तु पिपासुर्वियोगिनीनां नूनं
प्राणानामतिकुटिलः।।8।।

पश्य प्रावृट् पुनरायाता
नवसमृद्धिसहिता संप्राप्ता ................



# एकाकिनीं*

एकाकिनीं श्याम वने कथं मां
रुणत्सि मानिन्निवलां हि बालाम्।
वृन्दावनं यामि ततो निवृत्ता
ह्येष्यामि वर्षावनमेव भूयः।।1।।

तस्मान्निबद्धाञ्जलिरर्थये त्वा
माभूद् विलम्बस्त्वितिचिन्तयामि।
सा ज्येष्ठजाया तु तदन्यथा वै
प्रपीडये मां कलहैः सकोपा।।2।।

गोप्यत्र हन्तोपदिशामि भूयः
प्रदेहि किञ्चिद् दधि यामि याहि।
निषिध्यते सुन्दरि चेदिदानीं
परस्पराकर्षणमेव भूरि।।3।।

न चाद्य यावत्तु मया हि किञ्चिद्
दत्तं कथं रे पथि मां रुणत्सि।
ब्रवीमि बाले कलहायितेऽपि
दानी न कश्चिद् मिलितो व्रजेस्मिन्।।4।।

*रसिया-छन्दसः 'अकेली घेरी बन में आय, श्याम तेनें कैसी ठानी रे' इत्यस्यानुवादः।

# करोति धाष्ट्र्यं तव बालकोयम्*

अये यशोदे तव बालकोयं
करोति धाष्ट्र्यं विहसन् व्रजेऽस्मिन्।
विक्रेतुमायामि च गोपिकाहं
वृन्दावनं ते सरला विनम्रा।।1।।

मार्गस्थितो मां च रुरोध बालां
दध्याभुनक मे विचकर्ष बाहुम्।
ततोऽभिनन्मे दधिभाण्डमेव
चकर्ष शाटीमथ कञ्चुकं च।।2।।

त्यजामि तस्मान्नगरं तवैतत्
प्रयामि लज्जाविवशाऽन्यतश्च।
समाहिता गोपि वस त्वमेका
वृन्दावने भामिनि बालकेन।।3।।

* 'यशोदा तेरे लाला ने मोरी मटकी फोरी रे' इतिरसियाछन्दसःअनुवादः।



# अन्धकारः*

दिनाधिनाथं रजनीश्वरं वा ।।
प्रज्ज्वाल्य सर्वोडुगणान् प्रसन्नान्।
कृतेन कृष्णेन किमञ्जनेन
विनिर्मितं व्योम विशालमेतत्।।1।।

किं वा स्फुलिङ्गाः विधिबालिकायाः
शाट्यां निषक्ता इव सन्त्यनेके।
यद्वाऽन्धकारे सुरमालिकायाः
दिव्यानि कीर्णानि सुमानि तत्र।।2।।

सहस्ररश्मिः कथमन्धकारे
स्वरश्मिजालं वितनोति रम्यम्।
घनान्धकारासनसन्निविष्टः
किं चन्द्रिकां प्रेषयतीह चन्द्रः।।3।।

किमन्धकारे कविमानसेषु
कारुण्यगीतानि समुल्लसन्ति।
प्रस्नेहिनो प्रेम किमन्धकारे
तरङ्गरूपेण चकास्ति नूनम्।।4।।

प्राणा इव प्राणिजनस्य वायुः
किमन्धकारे बहु घूर्णतीव।
तथान्धकारे कलिकाः सुमानां
प्रसन्नतां यान्ति लतासु सान्द्रे।।5।।

* हिन्दीकवेः माखनलालचतुर्वेदिनः कविताया अनुवादः।

एकाग्रता मानवमानसेषु
प्रवर्धते किं सघनान्धकारे।
पतन्ति मुक्तामणयः समन्ताद्
घनान्धकारे किमु पादपेभ्यः।।6।।

अस्तित्वमस्यास्ति निजान्तहीनं
हातुं न शक्नोमि कदाचिदेनम्।
पीठे विनष्टे रमणीयचित्र-
विनाशभीतिः किल वर्धतेऽन्तः।।7।।

सत्यन्धकारे किरणाः पतन्ति
सुस्वागतं वै क्रियते जनेन।
प्रकाशमूल्यं च घनान्धकारे
प्रजायतेऽन्तर्भुवि वैभवस्य।।8।।

किञ्चिन्न वै दृष्टिभयं च लोके
सत्यन्धकारे किल सुंदरीणाम्।
आकर्ण्य पादध्वनिमन्धकारे
सान्द्रे च सर्वोप्यनुयाति लोकः।।9।।

त्रासोऽन्धकारस्य महान् पृथिव्यां
तथापि नैनं हि तिरः कुरुष्व।
श्याम स्व कृष्णं यदि कम्बलं वै
........ शश्च चकास्ति तत्र।।10।।



# उभौ जीवतो मिलितौ

चन्द्रावुभौ चकोरौ चोभौ
भवतो मिथः प्रमुदितौ।
उभौ चातकौ स्वाती चोभौ
विद्युद्घनौ तथोभौ।।1।।

द्वावरविन्दे द्वौ च मिलिन्दौ
लौहचुम्बकौ चोभौ।
मिथ आसक्तौ उभौ स्नेहिनौ
उभौ मिथः सम्मिलितौ।।2।।

मेघावुभौ मयूरौ चोभौ
हरिणौ रागासक्तौ।
रम्यौ मणी पन्नगौ चोभौ
उभौ वारिणी मीनौ।।3।।

रसपतिहृदयहारिणी सेयं
रसिकविहारी सोऽयम्।
दृष्ट्वाननं पिबन्तावधरा-
वुभौ जीवतो मिलितौ।।4।।

# निरन्तरं पश्य रे

मूर्धनि मुकुटं विलोक्य वीक्ष्य बर्हचन्द्रिकां
वीक्ष्य तनुकान्तिं च रूपरसं पिब रे।।1।।

लोचने विशाले वीक्ष्य गले गुञ्जमाल्यं वीक्ष्य
अधरं मधुरं विलोक्य मौनं हृदि कुरु रे।।2।।

कुण्डलं विलोलं वीक्ष्य पक्ष्मस्फुरणं विलोक्य
कुन्तलचलनं विलोक्य सर्वस्वं देहि रे।।3।।

पीतपटप्रान्तं वीक्ष्य मुरलीमधरे विलोक्य
श्यामुखं क्षणं वीक्ष्य निरन्तरं पश्य रे।।4।।

# चतुर्थखण्डः
## वैदिकसूक्तसौरभम्



### 1. पुरुषसूक्तम्*

सहस्रशीर्षाऽथ सहस्रलोचनः
सहस्रबाहुः पुरुषः सहस्रपाद्।
स सर्वतो व्याप्य भुवं सुसंस्थितो
दशाङ्गुलेऽन्तर्हृदि संविवेश सः।।1।।

भूतं भविष्यं यदु वर्तमानं
सर्वत्र सर्वं पुरुषः स एव।
स ईश्वरोऽन्नैः परिवर्धितानां
स एव मोक्षाधिपतिः समर्थः।।2।।

नैतादृशो वै महिमा न चेयान्
ज्यायांश्च तस्मात् पुरुषः स एव।
सर्वाणि भूतानि तदेक पादे
त्रयोऽस्य पादा दिवि चामृते च।।3।।

यस्माद् जगच्चास्य स पाद् एकः
ऊर्ध्वं त्रयो व्योम्नि च दीप्यमानाः।
स व्याप्तवानत्र जगद्धि सर्व-
मचेतनं यत् खलु चेतनं यत्।।4।।

ब्रह्माण्डमस्माच्च विराट् स्वरूपं
ब्रह्मा ततोऽभूत् पुरुषः परो यः।
ससर्ज भूमिं च पुरश्च सर्वास्
तासु प्रविष्टः स्वपुरीषु जीवः।।5।।

* ऋग्वेदः 10/90

यज्ञांस्ततः सर्वहुतः पवित्रान्
भोज्यं तथाज्यादि च वस्तुजातम्।
चक्रे पशून् संप्रति वायुदेवान्
ग्राम्यांस्तथारण्यचरांश्च सर्वान्।।6।।

यज्ञात् ततः सर्वहुतो बभूवुः
ऋचश्च सामानि च पावनानि।
छन्दांसि नानाथ यजूंषि चैव
प्रजज्ञिरेऽस्माज्जनपावनानि।।7।।

अश्वा अजायन्त ततो हि यज्ञाद्
ये केचिदत्रोभयतो दताश्च।
गावश्च तस्मादवयश्च सर्वा
अजाश्च तस्मादभवंस्तथाऽन्ये।।8।।

संस्कारवन्तः पुरुषं प्रजातं
सुप्रोक्षणैर्यज्ञमयं विशुद्धम्।
देवाः ससाध्या ऋषयो नराश्च
ज्ञानोपपन्ना अयजन्त देवान्।।9

व्यकल्पयंस्ते कतिधा कथं च
विवेकवन्तः पुरुषं महान्तम्।
मुखं च किं तस्य च कौ च बाहू
कौ तस्य चोरू अथ कौ च पादौ।।10।।

ये ब्राह्मणास्तेस्य मुखं प्रशस्तं
ये क्षत्रियास्तस्य मतौ च बाहू।
स्थूलौ तदूरू सुभगौ च वैश्या
पद्भ्यां च शूद्रः खलु जायते स्म।।11।।



रम्यो हिमांशुर्मनसोऽभिजज्ञे
व्यजायताक्ष्णोश्च सहस्ररश्मिः।
प्राणाश्च वायुश्च ततः श्रुतिभ्यां
शुचिर्मुखादग्निरजायतास्य।।12।।

बभूव नाभ्या महदन्तरिक्षं
शीर्ष्णस्तथा द्यौः समवर्ततागे।
भूमिश्च पद्भ्यां च दिशः श्रुतिभ्याम्
अकल्पयन् वै विविधांश्च लोकान्।।13।।

हव्येन देवा पुरुषेण येन
यज्ञं व्यतन्वन्त च यं महान्तम्।
आज्यं वसन्तर्तुरभूत् प्रकृष्टं
ग्रीष्मस्तथेध्मश्च हविः शरच्च।।14।।

सप्ताभवन् परिधयो जलधिस्वरूपा-
श्छन्दांसि यत्र विहिताः समिधास्त्रिसप्त।
यज्ञं च यं सुमतयो विबुधा अतन्वन्
चक्रुःपशुं तु पुरुषं नितरां तदर्थम्।।15।।

यज्ञेन यज्ञमयजन्त सुराः समन्तात्
धर्माश्च धारणपराः प्रथमा बभूवुः।।
प्रापुश्च नाकमतुलं परिदीव्यमानाः
साध्याश्च साधनपरा निवसन्ति यत्र।।16।।

## 2. नारायणसूक्तम्*

अद्भ्यः पृथिव्याश्च रसो य उद्गतः
सोऽवर्तताग्रे खलु विश्वकर्मणः।।
उद्यंश्च सूर्यो विदधाति रूपवद्
देवत्वमाप्नोति नरश्च यज्ञकृत्।।1।।

वेदाहमेतं पुरुषं महान्त-
मादित्यवर्णं तमसः परस्तात्।।
अत्येति मृत्युं किल यं विदित्वा
शिवाय पन्था जगतीह नान्यः।।2।।

भूतेषु चान्तः प्रविशन् प्रजापति-
रजायमानो बहुधा विजायते।।
पश्यन्ति धीरा निजरूपमस्य च
तस्मिंश्च तस्थुर्भुवनान्यनेकधा।।3।।

यो द्योतते देवहिताय भास्करः
शक्रः सुराणां च पुरोहितः परः।।
पूर्वं सुरेभ्योऽपि बभूव यः शुचि-
स्तस्मै नमो ब्रह्मभवाय तेजसे।।4।।

ब्राह्मं च तेजो जनयन्त एव ते
देवास्तदग्रे च तथा समब्रुवन्।।
यो ब्राह्मणो ब्रह्म च वेद वस्तुतो
भवन्ति देवा अखिले च तद्वशे।।5।।

* शुक्लयजुर्वेदस्य अध्यायः 31।



लक्ष्मीः श्रीश्चास्य पत्न्यौ दिनमथ रजनी पार्श्वभागौ च यस्य
रूपं नक्षत्रचक्रं मुखमथ रुचिरं चाश्विनौ देवमुख्यौ।।
याचेहं तं फलार्थं मम च सुखमया ते च लोका भवन्तु
मुक्तश्चास्माद् भवेयं सपदि गतमलः सर्वलोकात्मकोहम्।।6।

## 3. भद्रसूक्तम्*

आयान्तु नः शुभकराः क्रतवः सुखाय
यज्ञोद्भिदोऽनुपहताः स्वफलानुमेयाः।।
देवा भवन्त्वनलसाश्च समृद्धिवृद्ध्यै
रक्षन्तु नः प्रतिदिनं सततं प्रसन्नाः।।1।।

भद्रा मतिः सुमनसां विनिवर्ततां नः
आयान्तु तैरभिमुखं प्रहितं च वित्तम्।।
सख्यं च तैः सह परं समवाप्नुयाम
विन्देम जीवितुमहो खलु दीर्घमायुः।।2।।

तांश्चैव वेदवचसा वयमाह्वयाम
मित्रं भगं वरुणमर्यमणं च दक्षम्।।
सोमाश्विनावदितिमत्र सरस्वतीं च
ज्ञानान्विता भगवती सुखमातनोतु।।3।।

वातश्च वातु खलु भेषजमेव माता
पृथ्वी पिताऽभ्रमथ सोमसुतः शिलाश्च।।
तावश्विनौ च भिषजौ गृहरक्षितारौ
तद् भेषजं ददतु सौख्यकरं नराणाम्।।4।।

तं चाह्वयाम जगतः खलु तस्थुषश्च
बुद्धिप्रदं समवितुं परमेशितारम्।।
पूषा च नो भवतु धारयिता धनानां
स्वस्तिप्रदोऽनुपहतः सुसमृद्धये च।।5।।

* शुक्लयजुर्वेदस्य अध्यायः 25/14-23



स्वस्तिप्रदः पृथुयशा भवतात् सुरेन्द्रः
स्वस्तिप्रदो भवतु नोऽखिलविच्च पूषा।।
स्वस्तिप्रभुर्बलयुतः प्रदधातु तार्क्ष्यः
स्वस्तिप्रदो भवतु नः स बृहस्पतिश्च।।6।।

द्योमातरः शुभकरा पृषदश्ववन्तो
ज्ञानान्विता हि मरुतो मनवोऽग्निजिह्वाः।।
सूर्येक्षणाः क्रतुगृहं प्रति संव्रजन्त
आयान्तु नः समवितुं प्रसमीक्षमाणाः।।7।।

भद्रं सदैव शृणुयाम सुराः श्रुतिभ्यां
भद्रं सदा स्वनयनैश्च निभालयेम।।
अङ्गैः स्थिरैस्तनुभिरेव च संस्तुवन्तः
प्रत्तं सुरैः खलु विशेम परं यदायुः।।8।।

स्यातान्तिकं सुरगणाः शरदां शतं नो
यावद् भवेत् स्थविरता नियता तनूनाम्।।
पुत्रा यदायुषि भवन्ति सुपुत्रवन्त
आयुः प्रयासु न हि नः खलु तावदन्तम्।।9।।

द्यौश्चादितिर्भवतु नोऽदितिरन्तरिक्षं
माताऽदितिश्च जनकोऽदितिरेव पुत्राः।।
विश्वे सुरा अदितिरेव जनाश्च सर्वे
जातं जनिष्यदपि यत्वदितिस्तदेव।।10।।

द्यौरस्ति शान्तिरथ शान्तिरिहान्तरिक्षं
शान्तिर्धरा भवति शान्तिरथो जलानि।।
वृक्षाश्च शान्तिरिह चौषधयश्च शान्तिः
शान्तिः सुरा इह तथाखिलमेव शान्तिः।।11।।

सर्वत्र शान्तिरिह शान्तिरिह प्रशस्ता
शान्तिः परा त्विह समागच्छतु नः समीपम्।।
संवर्धतां प्रतिदिनं जगतीह शान्ति-
र्दिक्षु प्रदिक्षु भवतादथ शान्तिरेव।।12।।

यतो यतो वाञ्छसि नाथनाथ
ततस्ततोऽस्मानभयान् कुरुष्व।।
शं नः प्रजाभ्यः कृपया कुरुष्व
शं नः पशुभ्यश्च कुरुष्व नाथ।।13।।



## 4. उषःसूक्तम्*

उषः प्रिया त्वं दयिता दिवः शुभा
दानस्वभावा प्रथिता विभायुता।।
पुण्यं प्रभातं पुरतः कुरुष्व नो
धनैस्तथान्नैः प्रचुरैः सुशोभनम्।।1।।

अश्वैर्युता धेनुयुता धनप्रदा
प्रकाशिताऽनन्तगुणा विहायसि।।
प्रिया हिता वाच उषः प्रदेहि नो
दात्री धनानां धनिनां यशस्विनाम्।।2।।

उषा प्रभातं कुरुते स्म या पुरा
प्रभातमद्यापि करोति पूर्ववत्।।
देवी रथान् प्रेरयति प्रसज्जितान्
यथा स्वनावं जलधौ धनार्थिनः।।3।।

उषः सुरम्यागमनेषु सूरयो
दानाय सद्यः स्वमनः प्रयुञ्जते।।
यो दातुमैच्छत् प्रददाति यस्तदा
कण्ड्वाः प्रशंसन्ति च तावुभावपि।।4।।

प्रपालयन्ती गृहिणीव बालकान्
आयात्युषा संदधती जरां जने।।
प्रबोध्य सुप्तान् खलु पद्वतो जनान्
उड्डायत्याशु खगान् विहायसि।।5।।

* ऋग्वेदः 1/48/1-16

सा प्रेरयत्यर्थिजनं धनार्जने
नासौ विलम्बं सहते समागता।।
अस्या वियत्यागमने पतत्रिणः
स्थातुं स्वनीडे न भवन्ति सक्षमा।।6।।

सूर्योदयाद्रेरपि दूरतो जवादेषा द्युलोकादिह मानुषान् प्रति।।
शतैरथानां परिसज्जिता स्वयमायाति सौभाग्यवती सुखप्रदा।।7।।

तमो निमग्नाः प्रणमन्ति तां जना एषा प्रकाशं प्रतनोति सुन्दरी।।
दिवः सुतेयं सुखदा वसुप्रदा विद्वेषिणो दूरयति प्रबाधकान्।।8।।

उषे त्वमायासि युता स्वभानुभिराह्लादयन्ती दुहिता दिवःप्रिया।।
समावहन्ती महदत्र सौभगं निवारयन्ती भुवि विस्तृतं तमः।।9।।

प्रकाशसे त्वं प्रभयान्विता यदा त्वयि स्थितं प्राणनमस्य जीवनम्।।
प्रकाशशीले महता रथेन च त्वामाह्वयामः शृणु देवि शोभने।।10।।

उषे हविः स्वीकुरु भक्तितोर्पितं सुपुण्यशीला खलु मानवा हिते।।
ये त्वां प्रशंसन्ति कृते महाध्वरे तान् दानशीलांस्त्वमिहानय
द्रुतम्।।11।।

विश्वान् हि देवान् द्रुतमन्तरिक्षात् त्वं सोमपानार्थमुषःसमानय।।
यत् गोधनं वाजिधनं प्रशस्तिमदस्मासु तद्धेहि धनं सुवीर्यवत्।।12।।

प्रकाशमानाः शुभदास्तवार्चयो भवन्ति भूम्यां जनदृष्टिगोचराः।।
दद्यादुषा सर्वजनाभिकाङ्क्षितं सा वै धनं नः सुगमं सुपावनम्।।13।।

त्वामाह्वयन् ये मुनयः समृद्धये धनाय चान्नाय सुरक्षणाय च।।
उषः प्रसन्ना स्तुतिभिः सुपूजिते भव प्रकाशाय धनाय सुस्थिरा।।14।।



द्वारौ समुद्घाट्य दिवस्तमोयुतौ समागतासि त्वमुषः स्वरोचिषा।।
प्रयच्छ नो वीतभयं सुरक्षितं गेहं तथान्नं बहुधेनुशोभितम्।।15।।

उषः प्रसन्ना भव नः शुचिस्मिते धनान्विता त्वं सुभगा यशस्विनी।।
गोभिस्तथान्नैर्विविधैस्तथा धनैः प्रपूरयास्मान् यशसा सुर्वचसा।।16।।

## 5. विष्णुसूक्तम्*

ब्रवीमि कर्माणि महान्ति विष्णोः
पादैस्त्रिभिर्यो विममे त्रिलोकीम्।।
प्रास्थापयद् यः खलु सत्यलोक-
माधारभूतं जगतः प्रशस्तम्।।1।।

संस्तूयते यश्च पराक्रमैः स्वैः
सुनिर्भयः सिंह इवाचलस्थः।।
पादत्रये यस्य वसन्ति जीवा
मन्त्रस्थितो सर्वजनस्थितो यः।।2।।

वाचि स्थितं कामदमूर्ध्वसंस्थं
स्तुतिः कृता विश्रुतमेतु विष्णुम्।।
अमास्त लोकान् खलु देव एकः
पादैस्त्रिभिः स्वैः महतो महात्मा।।3।।

दिव्यामृतावत्तानि पदानि यस्य
न क्षीयमाणानि जनाश्रयाणि।।
दधार पृथ्वीं जलमग्निमभ्र-
मेकः स लोकानखिलान् स्वशक्त्या।।4।।

अस्य प्रियं लोकमवाप्नुयाम
तं यत्र नन्दन्ति तदाप्तिकामाः।।
ह्रदो महान् वै मधुनोऽमृतस्य
विष्णोः पदे भाति च विश्वबन्धोः।।5।।

* ऋग्वेदः 1/154



स्थानं तु तं प्रापयितुं महर्घं
वाञ्छामि यद् दीधितिराजमानम्।।
यत्रोरुगायस्य च कामदस्य
विभात्यनन्यं हि पदं महिम्नः।।6।।

## 6. पृथ्वीसूक्तम्*

सत्यं वृहद् ऋतमथो कठिनं तपो यां
वेदा मखा बहुविधा अथ धारयन्ति
या भूतभव्यपरिपालनकर्मदक्षा
स्थानं ददातु पृथिवी विततं सदा नः।।1।।

यस्यां समोन्नतनताः शतशः प्रदेशा
नित्यं वहन्ति रुचिराणि च निर्झराणि।।
या चौषधीर्बलकरीर्विविधा बिभर्ति
साराधिता भवतु नः पृथिवी हिताय।।2।।

यस्यां च वेल्लति महोदधिरुत्तरङ्गो
नद्यो वहन्ति कृषिभिः सुलभं तथान्नम्।।
तृप्ता भवन्त्यसुभृतः सुखिनश्च यस्यां
सा नो ददातु पृथिवी वसतिं निजाङ्के।।3।।

अन्नादिभिश्च विविधैः कृषिकर्मलभ्यै-
र्यस्यां भवन्ति निभृताः प्रदिशश्चतस्रः।।
या प्राणिनो बहुविधाननिशं बिभर्ति
सान्नेषु गोषु पृथिवी खलु नो दधातु।।4।।

यस्यां च पूर्वपुरुषाः पुरुषार्थयुक्ता
यस्यां सुराः समजयन्नसुरान् स्वशक्त्या।।
याऽऽश्रयकरी विहगधेनुतुरङ्गमाणां
सा नो दधातु विभवं च यशश्च वर्चः।।5।।

---

* अथर्ववेदः 12/1



विश्वंभरा वसुमती जगतः प्रतिष्ठा
स्वर्णं स्ववक्षसि दधाति जगन्निवासा।।
वैश्वानरं दधाति च या धरित्री
सा नो दधाति विभवानृषभा सुखाय।।6।।

रक्षन्ति यां प्रणिहिता अथ विश्वदानीं
वृन्दारका खलु निरन्तरमप्रमादम्।।
नाना रसैर्भवति या सततं प्रपूर्णा
सा नो भवेन्मधुदुहोक्षतु वर्चसा च।।7।।

अब्धौ च याधिसलिलं न्यवसत् स्वशक्त्या
यस्यां सुखेन व्यचरन् मुनयो धरित्र्याम्।।
यस्याः स्थितं च हृदयं परमेऽम्बरे सा
तेजो दधातु विभवं च बलं च राष्ट्रे।।8।।

सत्यावृतं प्रवहते ह्यमृतं हि यस्यां
यस्यां क्षरन्ति विमला मधुरास्तथापः।।
सा नो दधातु वसुधा वसु भूरि धारा
विश्वंभरा स्वपयसोक्षतु वर्चसा च।।9।।

यामश्विनावकुरुतां प्रममे च विष्णु-
रिन्द्रश्च यां प्रविदधे परिपन्थिहीनाम्।।
स्नेहेन सा भगवती पृथिवी प्रसन्ना
मातेव नो मृदु ददातु पयः सुतेभ्यः।।10।।

यस्यां हिमैः क्षितिधरा धवलैर्मनोज्ञा
यस्यां वनानि सुखदानि सदा जनेभ्यः।।
या श्यामला सुहरिता कपिलेन्द्रगुप्ता
तस्यां लभे गतभयः परमां प्रतिष्ठाम्।।11।।

मध्यं च हे पृथिवि ते खलु यत्र नाभिस्
तत्वानि तत्र विलसन्ति सुपोषकानि।।
तैर्नः प्रपालय च पावय देवि मात-
र्मेघः पिता भवतु जीवनदायकश्च।।12।।

वेदिं च यत्र रचयन्ति मखाय विज्ञा-
स्तम्भैर्ध्वजैर्बहुविधैः परिशोभते या।।
अन्नैर्धनैः स्वविभवैः परिवर्धमाना
सा वृद्धये भवतु नः पृथिवी स्वतन्त्रा।।13।।

वैरी जिघांसति च यः सबलः ससैन्यो
यो द्वेष्टि कोपि मनसा नितरां प्रतीपः।।
तं देवि रन्धय विनाशय शत्रुहन्त्रि
शीघ्रं च पालय सुतान् परिपालयित्री।।14।।

त्वत्तो भवन्ति मनुजास्त्वयि संचरन्ति
त्वं वै बिभर्षि मनुजांश्च चतुष्पदश्च।।
एवं सुतास्तव च पञ्चविधा मनुष्या
उद्यन् प्रपोषयति च यान् स्वकरैर्दिनेशः।।15।।

ते रश्मयो दिनकरस्य सुवर्णशोभा
दद्युः प्रजाः सुखमया मधुराश्च वाचः।।
सा सर्वतः सुखकरी नमतां जनानां
पृथ्वी च नो मधु दधातु सदा प्रपूर्णा।।16।।

या चौषधीर्वलकरीर्विविधा बिभर्ति
धर्मैः स्थिरा भवति या जगतश्च माता।।
कल्याणदा भवति या सुखदा च देवी
तस्यां सुखेन विचरेम युगानि यावत्।।17।।



या भ्राजते स्म जगतः सुनिवासभूता
यस्या गतिः प्रचलनं च विचित्रमेव।।
इन्द्रो महानवति यां च सुवर्णवर्णा
तेजो दधातु मयि सा द्विषदां क्षयाय।।18।।

यो वै जले दृषदि भूमितलेऽन्तरिक्षे
योऽश्वेसु गोषु पुरुषेषु तथौषधीषु।।
सूर्येऽपि योस्ति तमिमं खलु हव्यवाहं
दीप्तं करोति हविषा च नरः सुविज्ञः।।19।।

कृशानुवसनैर्धूमैः सततं या समावृता।
तेजो दधातु सास्मासु लोकमाता वसुन्धरा।।20।।

भूम्यां नरा ददति यत् सुहविः सुरेभ्यो
जीवन्ति यत्र मनुजा स्वधया सदन्नैः
सा नो ददातु पृथिवी खलु दीर्घमायुः
प्राणान् बलं च विपुलं वसुधा धनं च।।21।।

गन्धश्च यो भवति ते परमो धरित्रि
ह्यापश्च यं दधति चौषधयश्च सर्वाः।।
स्वर्गायका दधाति चाप्सरसश्च दिव्या
मातश्च नः सुरभितान् कुरु तेन पृथ्वि।।22।।

गन्धश्च यः पृथिवि पुष्करमाविवेश
सूर्याविवाहसमये विबुधाश्च बभ्रुः।।
गन्धेन नः सुरभितान् कुरु तेन मातः
कश्चिद् द्विषीत न हि नः वसुधातलेस्मिन्।।23।।

योषित्सु पुंसु तुरगेषु गजेषु गोषु
गन्धो मृगेषु वसुधे सुभटेषु यस्ते।।
तेजस्तु यन्निरुपमं खलु कन्यकासु
सर्वैश्च तैः सुरभितान् कुरु नो धरित्रि।।24।।

पांसुः शिलाश्च गिरयश्च तव स्वरूपं
धर्मे धृता त्वमसि देवि नृणां सुखाय।।
स्वर्णं स्ववक्षसि दधासि हिरण्यगर्भा
तस्यै नमः पृथिवि ते करवाम मूर्ध्ना।।25।।

तिष्ठन्तश्च समासीना प्रक्रामन्तस्तथा वयम्
भूम्यां चलन्तः पादाभ्यां न सीदेम कदाचन।।26।।

प्राच्यां स्थिता भुवि वनस्पतयोऽथ वृक्षाः
विश्वं दधाति खलु यां च जना नमन्ति।।
यस्यां चलन्त्युपविशन्ति विशन्ति जीवा
क्षेमाय सा भवतु नः सततं धरित्री।।27।।

भूमे क्षमासि विधिना च विवर्धितासि
स्वन्नं घृतं बलकरं निदधासि नित्यम्।।
गायामि ते गुणगणं नितरां विनम्रः
क्लेशान् निवार्य सुखदं मम देहि वासम्।।28।।

शुद्धाः क्षरन्ति मयि ता रुचिरास्तवापो
यो द्वेष्टि नो रिपुरसौ प्रविणाशमेतु।।
सिञ्चाम्यपः पृथिवि पावयितु च दर्भैः
पापानि हन्त निखिलानि लयं प्रयान्तु।।29।।



प्राच्यादयःखलु दिशः प्रदिशश्च सर्वा
ऊर्ध्वं ह्यधश्च नितरां प्रमुदे भवन्तु।।
आश्रित्य मध्यभुवनं तव देवि साध्वि
स्वस्थाश्चरेम न पतेम कदापि लोकात्।।30।।

नो पूर्वतो न पुरतो न हि चोत्तराच्च
पश्चाच्च नो भवतु मे ह्यहितं कदापि।।
त्वं स्वस्तये पृथिवि नो भव लोकमातः
शीघ्रं विदूरय खलान् परिपन्थिनश्च।।31।।

पश्यामि देवि वसुधे भवतीं हि यावद्
दृष्टिश्च नो भवतु तावदनामया च।।
शय्यापि नः सुखकरी जगदाश्रया च
पार्श्वे उभे त्वयि धरे परिवर्तयामि।।32।।

कन्दादि यद् बलकरं निखनामि भूमे
स्नेहाच्च तेऽवनि विरोहतु सत्वरं तत्।।
न त्वां च मर्मणि विभो प्रहराणि देवि
मातर्हि येन हृदयं व्यथितं तव स्यात्।।33।।

ग्रीष्मो वर्षा चाथ वर्षावसानो
हेमन्तोऽसौ शीतकालो वसन्तः।।
घस्रो रात्रिश्चाथ भूमे मिलित्वा
लोकोत्कर्षं सर्वदा वर्धयन्तु।।34।।

भूमौ कम्पो कम्पमाने तु शेषे
यस्यामासन्नग्नयो ये जलान्तः।
दस्यून् हत्वा या महेन्द्रं वृणोति
तस्मै वृष्णे धेनुरूपा विभाति।।35।।

भूम्यां स्तम्भा स्थापिता यत्र विप्रैर्
ऋग्भिः साम्ना स्वर्चितो यत्र विष्णुः।।
पातुं सोमं यत्र चेन्द्राय दद्युः
शुद्धा विज्ञा ऋत्विजो वा यजुर्भिः।।36।।

सप्तर्षयः स्वतपसा सह यत्र पूर्वे
ऊचुः सुयज्ञनिरता किल वेदमन्त्रान्।।
भूमिर्हि साभिलषितं द्रविणं ददातु
शक्रः पुरो भवतु यातु भगश्च साकम्।।37।।

नृत्यन्ति यत्र मनुजा मृदुगीतमग्नाः
क्रन्दन्ति यत्र समरे निरता भवन्ति।।
यस्यां च वै भवति दुन्दुभिरम्यघोषः
सा नो विदूरयतु शत्रुजनान् धरित्रि।।38।।

अन्नं ब्रीहियवौ यस्यां यस्यां पञ्चजनास्तथा।।
भूम्यै पर्जन्यपत्न्यै ते भूयो भूयो नमो नमः।।39।।

यस्याः क्षेत्रे पुरो रम्याः सन्ति देवविनिर्मिताः।।
तस्याः सर्वा दिशो रम्या विदधातु प्रजापतिः।।40।।

पृथ्वी दधाति बहुधा स्वनिधिं गुहासु
स्वर्णं मणीन् वसु च यत् निखिलं सुगुप्तम्।।
सा नो वसूनि वसुदा वसुधा प्रसन्ना
नित्यं ददातु विभवाय सुखाय चैव।।41।।

पृथ्वी बिभर्ति बहुधा बहुभाषिणो वै
लोकांश्च वासयति या बहुधर्मिणश्च।।



सा नः सुधेनुरिव वर्षतु दुग्धधाराः
शान्ताः स्थिराः किल धनस्य सुदिव्यधाराः।।42।।

आशीविषाश्च सविषा अथ वृश्चिकाश्च
ये वै गुहासु भुवि शीतभयाद् वसन्ति।।
वर्षासु ये प्रविचरन्ति सदा तवाङ्के
ते नोपयान्तु च भवन्तु शिवाय चैव।।43।।

मार्गाश्च येषु मनुजा बहवः प्रयान्ति
ये सन्ति ते बहुविधाश्च रथस्य मार्गाः।।
यैः संचरन्ति सुजनाः खलु यैश्च पापास्
ते नो भवन्तु च सुखाय शिवाय चैव।।44।।

द्रव्याणि या गुरुलघूनि दधाति देवी
या पापिनां सुकृतिनां वहते च भारम्।।
तोये वराहवपुषा न गवेषिता या
सा नः स्वयं भगवती प्रतनोतु सौख्यम्।।45।।

व्याघ्रा वृका वनमृगा गवया मृगेन्द्रा
भल्लूकघूकनिकराः पुरुषाशिनश्च।।
येऽन्ये वने बहुविधा विचरन्ति तेषु
क्रूरान् प्रपीड्य वसुधे कुरु दूरमेव।।46।।

अप्सरसश्च गन्धर्वा ये च दान विघातकाः।।
पिशाचा राक्षसा वापि तांश्च सर्वान् विदूरय।।47।।

यस्यां हंसा ये सुपर्णा विहङ्गा
आकाशाद् ये संपतन्ति द्विपादाः।।

यस्यां वृक्षान् पातयन् वाति वायु-
र्यस्यां वाताद् वर्धते वह्नितेजः।।48।।

यस्यां प्रातर्जायते चातिरम्यं
कृष्णो वर्णश्चारुणे सं प्रयाति।।
वाष्पच्छन्नं जायते यत्र सर्वं
सा नो भद्रं धाम देयाद् धरित्री।।49।।

द्यौर्भूमिश्चान्तरिक्षं च ददुः स्थानं सुविस्तृतम्।।
विश्वेदेवा रविश्चाग्निर्मेधामापश्च नो ददुः।।50।।

सहमाना वयं भूम्यां रणवेगं सुदुर्वहम्।।
नयेम शत्रुसंहारं कृत्वा प्रतिदिशं ध्रुवम्।।51।।

देवैरुक्ता यच्च भूमे पुरस्तात्
सद्यो देवि त्वं त्ववाप्ता महत्त्वम्।।
त्राणं प्रापुः प्राणिनो वै तवाङ्के
चत्वारो वै दिग्विभागा बभूवुः।।52।।

पुर्यो ग्रामा यान्यरण्यानि भूम्यां
संग्रामा ये यानि सम्मेलनानि।।
गत्वा गत्वा तत्र रम्यस्थलेषु
गायामस्ते सद्गुणान् देवि भूयः।।53।।

देहं प्रकम्प्य तुरगः स्वरजांसि यद्वद्
दूरीकरोति मनुजांस्त्वमपाकरोषि।।
अग्रोचरास्त्वमचला भुवनस्य गोप्त्री
सर्वौषधीरवसि सर्ववनस्पतीश्च।।54।।



यद् यद् वदामि मधुमत् खलु तद् वदामि
पश्यामि यत् तदभिलषन्ति जना जगत्याम्।।
तेजोनिधिश्च बलवानहमस्मि भूमे
रक्षाम्यहं च सुजनान् द्विषतो निहन्मि।।55।।

शान्तेव चाथ सुरभिः सुपयस्विनीव
यान्नं स्तनेषु सरला निदधासि नित्यम्।।
अन्नै रसैरमृततुल्यपयोभिरेषा
पुष्टिप्रदा भवतु नः सुखदा च भूमिः।।56।।

यामैच्छदाशु हविषा खलु विश्वकर्मा
पाथोनिधेः सुसलिले रजसि प्रविष्टम्।।
अन्नस्य भाण्डमिव सन्निहितं गुहायां
प्रादुर्बभूव नृहिताय तव स्वरूपम्।।57।।

त्वं क्षेत्रभूमिरसि कामदुघौषधीनां
माता त्वमस्यसुभृतां त्वमभीष्टदात्री।।
न्यूनं च यत्त्वयि विभाति च यत्त्वपूर्णं
पूर्णं च तत् प्रथमजः कुरुते प्रजेशः।।58।।

द्वीपाश्च ये प्रकटिता विविधास्त्वदङ्के
सन्त्वक्षया हितकराश्च निरामयाश्च।।
जीवेम दीर्घमिह वै प्रतिबुद्ध्यमाना-
स्तुभ्यं सदा बलिहराश्च भवेम देवि।।59।।

शुभं करोतु मे माता करोतु सुप्रतिष्ठितम्।।
भवेयं सर्वसम्पद्भिः समायुक्तः सुखान्वितः।।60।।